❀ ओ३म् ❀

## संस्कृत-शिक्षा —

# चतुर्थो-भागः ।

पं० जीवारामोपाध्यायप्रणीतः

तेनैव
मुरादाबादनगरे
स्वकीये-सरस्वतीनाम्नि मुद्रणयन्त्रे,
अङ्कयित्वा प्राकाश्यं नीतः ।

Printed & Published by—
Pt. JIWARAM UPADHYAYA
at the Saraswati-Press,
MORADABAD.

त्रयोदशावृत्तौ
२०००

सन् १९२६

मूल्यम् ॥)

# अस्मत्प्रकाशितपुस्तकानां सूचीपत्रम् ।

संस्कृत शिक्षा

# चतुर्थो भागः

अजरं विभुं करुणाकरं त्रयतापहं सुखदं परम्,
पुरुषं पुरोहितमादिदेवमजं महोच्चतमं गुरुम् ।
निजशक्तिसृष्टिकरं बुधं परमं पदं श्रुतिज्ञानदम्,
प्रणमामि सम्प्रति सादरेण नतोऽमरं परमेश्वरम् ॥१॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

तीनों लिङ्गों में, सर्व विभक्तियों में और सर्व वचनों में जो एकसा रहता है। वह अव्यय कहलाता है। यथा—स्वर् = स्वर्गलोक परलोक। अन्तर् = बीचमें। प्रातर् = प्रातः काल। पुनर् = फिर, निश्चय। सनुतर् = छिपना। उच्चैस् = ऊँचा। नीचैस् = नीचा। शनैस् = धीरे २। ऋधक् = सत्य, निरन्तर, समीप। पृथक् = अलग। ह्यस् = जो दिन बीत गया। श्वस् = आने वाला दिन। दिवा = दिन में। रात्रौ = रात में। सायम् = शाम। चिरम् = देरी में। मनाक्, ईषत् = अल्प, कुछ। जोषम् = आनन्द, चुप। तूष्णीम् = चुप। बहिस् अवस् = बाहर। समया, निकषा = समीप। स्वयम् = खुद। वृथा = निष्फल। नक्तम् = रात्रि में। नञ् = नहीं। हेतौ = निमित्त विषय में। इद्धा = स्पष्ट। अद्धा = साक्षात्। सामि = आधा। ब्राह्मणवत् = ब्राह्मण के तुल्य। क्षत्रियवत् = क्षत्रिय के सदृश। सना, सनत्, सनात् = सदा। तिरस् = टेढ़ा, तिरछा! अन्तरा = बीच में। अन्तरेण = विना। ज्योक् = विलम्ब। कम् = जल, सुख। शम् = सुख। सहसा = शीघ्र, विना विचारे। नाना = अनेक। स्वस्ति =

मङ्गल। स्वधा = पितृदान। अलम् = वस, शोभा। वषट्, श्रौषट् वौषट् = देवदान में आते हैं। अन्यत् = और। अस्ति = होना। उपांशु = चुपचाप। विहायसा = आकाश में। दोषा = रात्रि में। मृषा, मुधा = मिथ्या। पुरा = पूर्वकाल में। मिथस् = परस्पर। प्रायस् = बहुधा। मुहुस् = बार २। प्रवाहिका, प्रवाहुकम् = समान, काल, ऊपर। आर्यहलम् = बलात्कार, ज़बरदस्ती। अभीक्ष्णम् = बारम्बार। साकम्, सार्द्धम् = साथ। नमस् = नमस्कृति। हिरुक् = वर्जन, धिक् = धिक्कार, छि। अथ = अनन्तर। अम् = शीघ्र,अल्प। आम = स्वीकार। प्रताम् = ग्लानि। प्रशाम् = शान्त। प्रतान् = विस्तार। मा, माङ् = निषेध, प्रश्न। अथ-आदि। च*वा = या। ह = प्रसिद्ध। अह = अद्भुत। एव = निश्चय, केवल। एवम् = इस प्रकार। नूनम् = निश्चय। शाश्वत् = सदा। युगपत् = एक साथ। भूयस् = फिर। कूपत् = प्रश्न। कुवित् = अधिक। नेत् = सन्देह। चेत् चण् = यदि। कच्चित = इष्ट, प्रश्न। नह = नहीं। हन्त = हर्ष। माकिः, माकिम्, नकिः,नाकिम् = रोकना। यावत् = जबतक। तावत् = तबतक। छै, त्वै = वितर्क में, अनादर। स्वाहा = देवदान निमित्त साकल्यादि की आहुति देना। तथाहि तैसे ही। खलु = निषेध, सचमुच। किल = निश्चय, झूठ। अथ = पक्षान्तर, प्रश्न। सुष्ठु = अच्छा। स्म = भूतकाल बोधक। आदह = धिक्कार, आरम्भ।

## भाषा बनाओ।

स्वर्गे लोके महीयते। अन्तर्मदावस्थ इव द्विपेन्द्रः। प्रातर्भविष्यति गमिष्यति चौरभीतिः। उच्चैः पठन्ति शिशवो भवता निरीक्ष्याः। नाहं व्रजामि भगवन्! पठनाय नीचैः। शनैः कन्था शनैः पन्थाः शनैः पर्वतलङ्घनम्। ज्ञानादृते न मनुजो लभते हि

* समुच्चय, अन्वाचय, इतरेतरयोग समाहार आदि अर्थों में आता है।

मुक्तिम् । युगपत् सर्वे समागताः । कर्माणि पृथगावयोः । ह्यो मे मातुल आगतः । श्वस्ते श्रोतास्मि पाठनम् । रात्रौ गायन्ति गायकाः । क्षिप्रं विजानाति चिरं शृणोति । बुधा न तूष्णीं समितौ भवन्ति । बहिर्गता ब्राह्मणबालकास्ते । चरन्ति गङ्गा निकषा कुरङ्गाः । स्वयं न खादन्ति फलानि वृक्षाः । प्रतिप्रियं चेद् भवतो-न कुर्याम्, वृथा हि मे स्यात्स्वपदोपलब्धिः । नक्तन्दिवं ध्यायति देवदेवम् । भवति सामि फलं सुमते ! सखे ! । सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव । अलं महीपाल ! तव श्रमेण । मुधा त्वया कवे ! सखे ! कदापि नो विधीयताम् । मिथो मन्त्रं न ते चक्रुः । निशीथे तस्कराः प्रायो विचरन्ति महीतले । मया सार्द्धं न गन्तव्यम् । नमस्ते भगवन् ! भूयः । एवं नूनं मया दृष्टम् । यावत् पठामि तावत्सर्वं स्मरामि ।

## संस्कृत बनाओ ।

स्वर्गलोक में महिमा को प्राप्त होता है । भीतर जिसके मद है ऐसे हाथी की नाईं था । सुबह होगा और चोर का डर जायगा । लड़के ज़ोर से पढ़ते हैं आप मनें करदें । महाशय ! मैं पढ़ने के लिये नीचे नहीं जाता हूं । गुदड़ी को गूँथना मार्ग का चलना और पहाड़ से उतरना धीरे २ होता है । विना ज्ञान के मनुष्य मुक्ति को नहीं पा सकता । एक साथ सब लड़के आगये । हम दोनों के काम भिन्न २ हैं । कल मेरे मामा आये हैं । कल तुम्हारा पढ़ना सुनूंगा । गाने वाले रात में गाते हैं । शीघ्र जान लेता है और बहुत देर तक सुनता है । सभा में विद्वान् चुप नहीं होते । वे सब ब्राह्मणों के लड़के बाहर चले गये । गङ्गा के समीप हरिण चरते हैं। वृक्ष अपने आप फल नहीं खाते । प्रत्युपकार यदि मैं आपका न करूं तो अपने पद की उपलब्धि निरर्थक है । रात दिन परमेश्वर का ध्यान करता है । हे मित्र ।

इसमें आधा फल होता है। बिना विचारे किसी कार्य को नहीं करना चाहिए क्योंकि मूर्खता तमाम दुःखों की जड़ है। हम कल्याणकारी मार्ग पर सूर्य और चन्द्र की तरह एक दूसरे के पीछे चलें। हे कवि मित्र! तुमको झूठ कभी न कहना चाहिये। उन्होंने आपस में सलाह नहीं की। अक्सर अर्धरात्रि में चोर भूमि पर घूमा करते हैं। मेरे साथ नहीं चलना चाहिए। महाशय! आपको बार २ नमस्कार करता हूँ। ऐसा निश्चय मैंने देखा। जितना पढ़ लेता हूँ उतना सब याद कर लेता हूँ।

## अथ तिङन्ते भ्वादिगणप्रकरणम्।

### १ भू-सत्ता, होना।

१—लट्-भवति, भवतः, भवन्ति। भवसि, भवथः, भवथ। भवामि, भवावः, भवामः २ लिट्—बभूव, बभूवतुः, बभूवुः। बभूविथ, बभूवथुः, बभूव। बभूव, बभूविव, बभूविम। ३ लुट्-भविता, भवितारौ, भवितारः। भवितासि, भवितास्थः, भवितास्थ। भवितास्मि, भवितास्वः भवितास्मः। ४ लृट्-भविष्यति भविष्यतः, भविष्यन्ति। भविष्यसि, भविष्यथः भविष्यथ। भविष्यामि, भविष्यावः, भविष्यामः। ५ लोट्—भवतु, भवतात्,

---

१—लट् लृट् लोट् लुङ् इनका अर्थ द्वितीय पुस्तक में लिख दिया है। लिट् लकार का प्रयोग भूतकाल में आता है। लुट् का प्रयोग काल की मर्यादा होने पर भविष्यत् में। लङ्-आज को छोड़कर भूत में। विधिलिङ्-आज्ञा में। आशीर्लिङ्-आशीर्वाद में। लृङ्-क्रियातिपत्ति में। २ इस गण में जितने धातु आवेंगे उनके रूप भू धातु के सदृश होंगे और जिन रूपों में भेद होगा उनको अधिकतर लिखा जावेगा। बहुधा आगे प्रत्येक लकार में एक २ रूप लिखा जायगा, प्रायः अन्य रूप प्रत्येक गण के प्रथम धातु के सदृश होंगे।

भवताम् भवन्तु । भव, भवतात् भवतम् भवत । भवानि भवाव भवाम । ६-लङ्-अभवत् अभवताम् अभवन् । अभवः अभवतम् अभवत । अभवम् अभवाव अभवाम । ७-विधिलिङ्—भवेत् भवेताम् भवेयुः । भवेः भवेतम् भवेत । भवेयम् भवेव भवेम । ८-आशीर्लिङ्—भूयात् भूयास्ताम् भूयासुः । भूयाः भूयास्तम् भूयास्त । भूयासम् भूयास्व भूयास्म । ९-लुङ्-अभूत् अभूताम् अभूवन् । अभूः अभूतम् अभूत । अभूवम् अभूव अभूम । १० लृङ्-अभविष्यत् अभविष्यताम् अभविष्यन् । अभविष्यः अभविष्यतम् अभविष्यत । अभविष्यम् अभविष्याव अभविष्याम ।

## २ अत = निरन्तर चलना ।

लट्-अतति । लिट्-आत आततुः आतुः । आतिथ आतथुः आत । आत आतिव आतिम । लुट्-अतिता० । लृट्-अतिष्यति । लोट्-अततु० । लङ्-आतत् आतताम् आतन् । आतः आततम् आतत । आतम् आताव आताम । विधिलिङ्-अतेत् ० । आ० लिङ्-अत्यात् अत्यास्ताम् अत्यासुः । अत्याः अत्यास्तम् अत्यास्त । अत्यासम् अत्यास्व अत्यास्म । लुङ्—आतीत् आतिष्टाम् आतिषुः । आतीः आतिष्टम् आतिष्ट । आतिषम् आतिष्व आतिष्म । लृङ्—आतिष्यत्० ।

## ३ षिध = जानना, जाना, प्रापरा ।

लट्—सेधति । लिट्—सिषेध सिषिधतुः सिषिधुः । सिषेधिथ सिषिधथुः सिषिध । सिषेध सिषिधिव सिषिधिम । लुट्-सेधिता । लृट्-सेधिष्यति । लोट्—सेधतु । लङ्—असेधत् असेधताम् असेधन् । असेधः असेधतम् असेधत । असेधम् असेधाव असेधाम । विधिलिङ्—सेधेत् । आशीर्लिङ्—सिध्यात् सिध्यास्ताम् सिध्यासुः । लुङ्—असेधीत् असेधिष्टाम् असेधिषुः । लृङ्—असेधिष्यत् ।

## ४ चिती = जानना, स्मरण ।

लट्—चेतति । लिट्—चिचेत चिचिततुः चिचितुः । चिचेतिथ चिचितथुः चिचित । चिचेत चिचितिव चिचितिम । लुट्—चेतिता । लृट्—चेतिष्यति । चेततु । अचेतत् । चेतेत् । चित्यात् चित्यास्ताम् चित्यासुः । अचेतीत् अचेतिष्टाम् अचेतिषुः । अचेतिष्यत् ।

## ५ शुच शोक, सोच करना ।

शोचति । शुशोच शुशुचतुः शुशुचुः. शुशोचिथ शुशुचथुः शुशुच शुशोच शुशुचिव शुशुचिम । शोचिता । शोचिष्यति । शोचतु । अशोचत् । शोचेत् शोचेताम् शोचेयुः । शुच्यात् शुच्यास्ताम् शुच्यासुः । अशोचीत् अशोचिष्टाम् अशोचिषुः । अशोचिष्यत् ।

———※———

नागरिकम् = शहरका के, की। ग्राम्यम् = गाँवका। वन्यम् = वन में पैदा हुआ । गिरिजम् = पर्वत में जन्मा । सामुद्रम् = समुद्रका। पार्थिवम् = पृथ्वी का । अप्यम् = जलका । तैजसम् = तेजका । वायव्यम् = वायुका । आम्बरम् = आकाश का । मार्तिकम् = मिट्टीका । औपलम् = पत्थर का । सौवर्णम् = सोने का । राजतम् = चांदी का । पैत्तलम् = पीतल का । खनिजम् = खान में पैदा हुआ । हृद्यम् = मनोहर । व्यवसायः = उद्यम, रोज़गार । आचरणम् = चाल चलन । कज्जलम् = काजल ।

## भाषा बनाओ ।

नागरिकौ बालकावावाम् । हृद्यानि फलानि तानि । ग्राम्या प्रजा मे कथनं करोति । लक्ष्मीबाला वदति श्वो मे गेहे होमो भविता। ह्योऽत्र किं किमभवत् । यदाहमागच्छेयं तदा यूयं तत्रैव भवेत । भवन्तो विद्यावन्तो धनवन्तो बलवन्तो भूयासुः

यदि यूयं पठने श्रमम् करिष्यत तर्हि शीघ्रमेव विद्वांसोऽभविष्यत। गरिजानि फलानि मिष्टानि भवन्ति। अत्रत्यानि मार्तिकानि पात्राणि सुष्ठु जायन्ते। जयपुराणि समानि मन्दिराण्यौपलानि सन्ति। एषां बालकानां कीदृशानि आचरणानि सन्ति? शोभनानि पवित्राणि आनुकरणीयानि च विद्यन्ते।

## संस्कृत बनाओ।

शहर की चीज़ें सुन्दर होती हैं। इस गांव की प्रजा सब मेरा कहना मानती है। लक्ष्मी लड़की कहती है कि कल मेरे घर पर हवन होगा। कल यहाँ पर क्या २ हुआ। जब मैं आऊँ तब तुम वहाँ होना। ईश्वर करे आप विद्वान् बलवान् धनवान् होवें। यदि तुम पढ़ने में मेहनत करोगे तो जल्द विद्वान् होजाओगे। पहाड़ के फल मीठे होते हैं। क्या यहाँ की मिट्टी के बर्तन अच्छे होते हैं? जयपुर के सब मकानात पत्थर के हैं। इन लड़कों का चालचलन कैसा है।? सुन्दर पवित्र और अनुकरण करने के योग्य है।

## ६—गद = स्पष्ट बोलना।

गदति। जगाद जगदतुः जगदुः, जगदिथ जगदथुः जगद, जगाद, जगद जगदिव जगदिम। गदिता। गदिष्यति। गदतु। अगदत्। गदेत्। गद्यात्। अगादीत्, अगदीत्। अगदिष्यत्।

## ७—णद = घण्टादि का शब्द जो समझ में न आसके।

नदति। ननाद, नेदतुः नेदुः। नदिता। नदिष्यति। नदतु अनदत्। नदेत्। नद्यात्। अनादीत्, अनदीत्, अनादिष्टाम्, अनदिष्टाम्, अनादिषुः, अनदिषुः, अनदिष्यत्।

## ८—टु-नदि = फलना, फूलना, आनन्द होना

नन्दति । ननन्द ननन्दतुः ननन्दुः । ननन्दिथ । नन्दिता । नन्दिष्यति । नन्दतु अनन्दत् । नन्देत् । नन्द्यात् नन्द्यास्ताम् नन्द्यासुः । अनन्दीत् अनन्दिष्टाम् अनन्दिषुः । अनन्दिष्यत् ।

## ९—अर्च = सत्कार करना ।

अर्चति । आनर्च आनर्चतुः आनर्चुः । आनर्चिथ अनर्चथुः आनर्च । आनर्च आनर्चिव आनर्चिम । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् आर्चताम् आर्चन् । अर्चेत् अर्चेताम् अर्चेयुः । अर्च्यात् अर्च्यास्ताम् अर्च्यासुः । आर्चीत् आर्चिष्टाम् आर्चिषुः । आर्चिष्यत् ।

## १०—व्रज-जाना ।

व्रजति । वव्राज वव्रजतुः वव्रजुः । वव्रजिथ वव्रजथुः वव्रज । वव्राज, वव्रज वव्रजिव वव्रजिम । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् । अव्राजीत् अव्राजिष्टाम् अव्राजिषुः । अव्रजिष्यत् ।

आक्षेपः = ताना देना । विक्षेपः = फेंकना । निशाकरः = चन्द्रमा । दिवाकरः = सूर्य्य । दूषणम् = ऐब, एतराज़ । विस्मयापन्नः = हैरान । संशयापन्नः = संशय में पड़ा हुआ । भव्यम् = शुभ, सत्य, शानदार । परमार्थविन्दः = परोपकारी । पुष्कलम् = बहुत काफी । दृढमुष्टिः = कंजूस । नाकम् = स्वर्ग, सुख ॥

## भाषा बनाओ ।

जगाद भूयोजगदेकनाथः । कति घण्टा नदन्तीदानीम् । आर्चीद् द्विजातीन् परमार्थविन्दान् । किमहं गदानि भवतां विदुषां पुरस्तात् । भवन्ति भव्येषु हि पक्षपाताः। अद्य दिवाकरस्य सन्तापस्तीक्ष्णोऽस्ति । निशाकरस्य किरणा मोदयन्ति ।

## संस्कृत बनाओ।

आचार पहिला धर्म है। क्या आप में कोई दूषण नहीं है ? मैं हैरान हूं कि आप ऐसे नरों का सत्कार करते हैं। मैं बहुत समय से शक में पड़ा हुवा हूँ। सचाई से पाप क्षय होता है। अनाचार से संसार में पाप बढ़ते हैं।

## ११—कट–वर्षना, ढाँकना।

कटति। चकाट। कटिता। कटिष्यति। कटतु। अकटत्। कटेत्। कट्यात्। अकटीत्। अकटिष्यत्।

## १२—गुपू = रक्षण, बचाना।

गोपायति। लिट्–गोपायाञ्चकार गोपायाञ्चक्रतुः गोपायाञ्चक्रुः। गोपायाञ्चकर्थ गोपायाञ्चक्रथुः गोपायाञ्चक्र। गोपायाञ्चकार, चकर। गोपायाञ्चकृव गोपायाञ्चकृम। गोपायाम्बभूव गोपायाम्बभूवतुः गोपायाम्बभूवुः। गोपायाम्बभूविथ गोपायाम्बभूवथुः गोपायाम्बभूव। गोपायाम्बभूव गोपायाम्बभूविव गोपायाम्बभूविम। गोपायामास गोपायामासतुः ग पायामासुः। गोपायामासिथ गोपायामासथुः गोपायामास। गोपायामास गोपायामासिव गोपायामासिम। जुगोप जुगुपतुः जुगुपुः। जुगोपिथ, जुगोप्थ जुगुपथुः जुगुप जुगोप जुगुपिव जुगुप्व जुगुपिम, जुगुप्म। लुट्–गोपायिता गोपिता, गोप्ता। लृट्–गोपायिष्यति. गोपिष्यति, गोप्स्यति। लोट् गोपायतु। अगोपायत्। गोपायेत् गोपायेताम् गोपायेयुः। गोपाय्यात् गोपाय्यास्ताम् गोपाय्यासुः। गुप्यात् गुप्यास्ताम् गुप्यासुः। अगोपायीत् अगोपीत् अगौप्सीत् अगौप्ताम् अगौप्सुः।अगौप्सीः अगौप्तम् अगौप्त। अगौप्तम् अगौप्स्व अगौप्स्म। अगोपायिष्यत् अगोपिष्यत् अगोप्स्यत्।

## १३–क्षि = नाश होना ।

क्षयति । चिक्षाय चिक्षियतुः चिक्षियुः चिक्षियिथ, चिक्षेथ चिक्षियथुः चिक्षिय । चिक्षाय, चिक्षिय चिक्षियिव चिक्षियिम क्षेता । क्षेष्यति । क्षयतु । अक्षयत् क्षयेत् । क्षीयात् क्षीयास्ताम् क्षीयासुः । अक्षैषीत् अक्षैष्टाम् अक्षैषुः । अक्षेष्यत् ।

## १४–तप = तपना, जलना ।

तपति । तताप तेपतुः तेपुः, तेपिथ,ततप्थ तेपथुः तेप तताप ततप तेपिव तेपिम । तप्ता । तप्स्यति। तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् अताप्ताम् अताप्सुः अताप्सीः अताप्तम् अताप्त । अताप्सम् अताप्स्व अताप्स्म । अतप्स्यत् ।

## १५–क्रमु = टहलना, चलना ।

क्राम्यति, क्रामति । चक्राम चक्रमतुः चक्रमुः । चक्रमिथ चक्रमथुः चक्रम । चक्राम, चक्रम चक्रमिव चक्रमिम । क्रमिता । क्रमिष्यति । क्राम्यतु, क्रामतु । अक्राम्यत्, अक्रामत् । क्राम्येत्, क्रामेत् । क्रम्यात् क्रम्यास्ताम् क्रम्यासुः । अक्रमीत् अक्रमिष्टाम् अक्रमिषुः । अक्रमिष्यत् ।

## १६–पा = पीना ।

पिबति । पपौ पपतुः पपुः । पपिथ,पपाथ पपथुः पप । पपौ-पपिव पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् । पेयात् पेयास्ताम् पेयासुः । अपात् अपाताम् अपुः । अपास्यत् ।

## १७–ग्लै = ग्लानि करना, नफ़रत ।

ग्लायति । जग्लौ जग्लतुः जग्लुः, जग्लिथ जग्लथुः जग्ल जग्लौ जग्लिव जग्लिम । ग्लाता । ग्लास्यति ग्लायतु, अग्लायत् ग्लायेत् । ग्लायात् ग्लायास्ताम् ग्लायासुः । ग्लेयात् ग्लेयास्ताम् ग्लेयासुः । अग्लासीत् अग्लासिष्टाम् अग्लासिषुः । अग्लास्यत्

## १८—ह्वृ = कुटिलता करना ।

ह्वरति । जह्वार जह्वरतुः जह्वरुः । जह्वर्थ जह्वरथुः जह्वर । जह्वार, जह्वर जह्वरिव जह्वरिम । ह्वर्ता । ह्वरिष्यति । ह्वरतु । अह्वरत् । ह्वरेत् । ह्वर्यात् । अह्वार्षीत् । अह्वरिष्यत् ।

## १९—श्रु = सुनना ।

शृणोति । शुश्राव शुश्रुवतुः शुश्रुवुः, शुश्रोथ शुश्रुवथुः शुश्रुव शुश्राव, शुश्रव, शुश्रुव शुश्रुम । श्रोता । श्रोष्यति । शृणोतु । अशृणोत् अशृणुताम् अशृण्वन् । अशृणोः अशृणुतम् अशृणुत । अशृणुवम् अशृणुव, अशृण्व अशृणुम, अशृण्म । शृणुयात् । श्रूयात् श्रूयास्ताम् श्रूयासुः । अश्रौषीत् अश्रौष्टाम् अश्रौषुः । अश्रोष्यत् ।

## २०—गम्लृ = जाना ।

गच्छति । जगाम जग्मतुः जग्मुः । जगमिथ—जगन्थ जग्मथुः जग्म । जगाम, जगम जग्मिव जग्मिम । गन्ता । गमिष्यति । गच्छतु । अगच्छत् । गच्छेत् । गम्यात् । अगमत् । अगमिष्यत् ॥

पञ्चत्वम् = पृथ्वी, जल तेज वायु आकाश । पञ्चत्वम् = मरना । प्रत्यवसानम् = भोजन । प्रतिमानम् = तसवीर, परछाईं । अजीर्णम् = बदहज़मी । अज्ञानम् = बेवकूफी । अध्ययनम् = पढ़ना । अध्यापनम् = पढ़ाना । अनुधावनम् = पीछे दौड़ना । सम्भ्रमः = आदर, तकल्लुफ़ । लमकः = लम्पट, अय्याश ।

## भाषा बनाओ ।

गोपायति क्षितिमिमां चतुरब्धिसीमाम् । अजीर्णे भोजनं विषम् । तपस्तपति दुष्करम् । अश्वाः क्राम्यन्ति, नो गजाः । मदिरां पिबन्ति मनुजा नहि ग्लायन्ति । मम वचनं शृणोषि भोः । सम्भ्रमो नहि कर्तव्यः । चैत्रे न गन्तास्मि कदापि तत्र । क्षयन्तु पापानि समानि मे प्रभो ! गच्छानि पारं भवसागरस्य ।

## संस्कृत बनाओ ।

पाँच तत्त्व कौन हैं क्या आप जानते हैं? जल में परछाईं को देख कर सिंह उसमें कूद पड़ा। जितने रोग हैं वे सब बद-हज़्मी से होते हैं। हमारा पढ़ना पढ़ाना कुछ भी नहीं होता। बहुत तकल्लुफ़ अच्छा नहीं होता। भोजन में कितना विलम्ब है। तुम्हारे छोटे चाचा सोमदेव पूछते हैं।

## अथात्मनेपदप्रकरणम् ।

### १-एध = बढ़ना, वृद्धि ।

लट्-एधते एधेते एधन्ते,एधसे एधेथे एधध्वे एधे एधावहे एधामहे। लिट्-एधाञ्चक्रे एधाञ्चक्राते एधाञ्चक्रिरे एधाञ्चकृषे एधाञ्चक्राथे एधाञ्चकृढ्वे एधाञ्चक्रे एधाञ्चकृवहे एधाञ्चकृमहे। एधाम्बभूव एधाम्बभूवतुः एधाम्बभूवुः एधाम्बभूविथ एधाम्बभूवथु. एधाम्बभूव २ एधाम्बभूविव एधाम्बभूविव। एधामास एधामासतुः एधामासुः एधामासिथ एधामासथुः एधामास, एधामास एधामासिव एधामासिम। लुट्-एधिता एधितारौ एधितारः एधितासे एधितासाथे एधिताध्वे एधिताहे एधितास्वहे एधितास्महे। लृट् एधिष्यते एधिष्येते एधिष्यन्ते एधिष्यसे एधिष्येथे-एधिष्यध्वे एधिष्ये एधिष्यावहे एधिष्यामहे। लोट्-एधताम् एधेताम् एधन्ताम् एधस्व एधेथाम् एधध्वम् एधै एधावहै एधामहै । लङ्-ऐधत ऐधेताम् ऐधन्त, ऐधथाः ऐधेथाम् ऐधध्वम्। ऐधे ऐधावहि ऐधामहि । विधिलिङ्-एधेत एधेयाताम् एधेरन् , एधेथाः एधेयाथाम् एधेध्वम् एधेय एधेवहि एधेमहि। आशीर्लिङ्-एधिषीष्ट एधिषीयास्ताम् एधीषीरन् , एधिषीष्ठाः एधिषीयास्थाम् एधिषीध्वम् एधिषीय एधिषीवहि एधिषीमहि लुङ्-ऐधिष्ट ऐधिषाताम् ऐधिषत, ऐधिष्ठाः ऐधिषाथाम् ऐधिध्वम् ऐधिषि ऐधिष्वहि ऐधिष्महि

लृङ्-ऐधिष्यत ऐधिष्येताम् ऐधिष्यन्त ऐधिष्यथाः ऐधिष्येथाम् ऐधिष्यध्वम् ऐधिष्ये ऐधिष्यावहि ऐधिष्यामहि ।

## २ कमु = इच्छा करना ।

कामयते । कामयाञ्चक्रे कामयाम्बभूव कामयामास । चकमे चकमाते चकमिरे चकमिषे चकमाथे चकमिध्वे चकमे चकमिवहे चकमिमहे । कामयिता, कमिता । कामयिष्यते, कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट, कमिषीष्ट । लुङ्-अचीकमत अचीकमेताम् अचीकमन्त अचीकमथाः अचीकमेथाम् अचीकमध्वम् अचीकमे अचीकमावहि अचीकमामहि । अचकमत अचकमेताम् अचकमन्त । अकामयिष्यत, अकमिष्यत ।

## ३ अय = जाना ।

अयते प्लायते, पलायते । अयाञ्चक्रे अयाम्बभूव, अयामास अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट अयिषीयास्ताम् अयिषीरन् । आयिष्ट आयिषाताम् आयिषत । आयिष्यत आयिष्येताम् आयिष्यन्त ।

## ४ द्युत = प्रकाश, चमक ।

द्योतते । दिद्युते दिद्युताते दिद्युतिरे दिद्युतिषे दिद्युताथे दिद्युतिध्वे, दिद्युते दिद्युतिवहे दिद्युतिमहे । द्योतिता । द्योतिष्यते द्योतताम् । अद्योतत । द्योतेत । द्योतिषीष्ट । अद्योतिष्ट अद्योतिषाताम् अद्योतिषत, अद्युतत् । अद्योतिष्यत ।

## ५ श्विता = वर्ण, रङ्गना ।

श्वेतते । शिश्विते शिश्विताते शिश्वितिरे शिश्वितिषे शिश्विताथे शिश्वितिध्वे शिश्विते शिश्वितिवहे शिश्वितिमहे । श्वेतिता । श्वेतिष्यते । श्वेतताम् । अश्वेतत । श्वेतेत । श्वेतिषीष्ट । अश्वेतिष्ट अश्वेतिषाताम् अश्वेतिषत । अश्वितत् अश्वि-

तताम् अश्वितन्, अश्वितः अश्वितमम् अश्वितत, अश्वितम् अश्विताव अश्विताम । अश्वेतिष्यत ।

## ६ ञिमिदा = स्नेहन, मिलना, चिकना ।

मेदते । मिमिदे । मेदिता । मेदिष्यते । मेदताम् । अमेदत । मेदेत । मेदिषीष्ट अमेदिष्ट, अमिदत् । अमेदिष्यत ।

## ७ ञिस्विदा = चिकना, त्याग ।

स्वेदते । सिष्विदे । स्वेदिता । स्वेदिष्यते । स्वेदताम् । अस्वेदत । स्वेदेत । स्वेदिषीष्ट । अस्वेदिष्ट, अस्विदत् अस्विदताम् अस्विदन् । अश्वेदिष्यत ।

## ८ ञिक्ष्विदा = चिकना, मोचन ।

क्ष्वेदते । चिक्ष्विदे । क्ष्वेदिता । क्ष्वेदिष्यते । क्ष्वेदताम् । अक्ष्वेदत । क्ष्वेदेत । क्ष्वेदिषीष्ट । अक्ष्वेदिष्ट, अक्ष्विदत् । अक्ष्वेदिष्यत ।

## ९ रुच = प्रकाश, अतिप्रीति, अच्छा लगना ।

रोचते । रुरुचे रुरुचाते रुरुचिरे, रुरुचिषे रुरुचाथे रुरुचिध्वे रुरुचे रुरुचिवहे, रुरुचिमहे । रोचिता । रोचिष्यते । रोचताम् । अरोचत । रोचेत । रोचिषीष्ट । अरोचिष्ट, अरुचत् । अरोचिष्यत ।

## १० घुट = घोटना व चलना ।

घोटते । जुघुटे । घोटिता । घोटिष्यते । घोटताम् । अघोटत । घोटेत । घोटिषीष्ट । अघोटिष्ट, अघुटत् । अघोटिष्यत ।

## भाषा बनाओ ।

अस्य वनस्य वृक्षाः स्वयमेवैधन्ते । भारतीयाः प्राचीनाः क्षत्रियाः किं कामयाञ्चक्रिरे । श्वो युष्मासु को युद्धायाऽयिता । प्राच्यां भानुर्द्योतते । मदीयोऽयं शाटः कथं मेदताम् । वयं ते

च समे मर्त्याः श्वो वः समितिमायितास्महे । मोदकास्ते न रोचन्ते । ? किं घोटामहै नौषधम् ।

## संस्कृत बनाओ !

इस बन में वृक्ष अपने आप बढ़ते हैं। प्राचीन भारतवर्ष के क्षत्रियों ने क्या चाहा ? कल तुम में से कौन युद्ध के लिये जावेगा ? पूर्व की ओर सूर्य्य चमकता है। यह मेरा कपड़ा क्यों चिकना होवे ? हम और वे सब मनुष्य कल तुम्हारी सभा में आवेंगे। लड्डू तुझे अच्छे नहीं लगते। क्या हम दवाको न घोटें।

## ११–शुभ = शोभा, अच्छा लगना ।

शोभते। शुशुभे। शोभिता। शोभिष्यते। शोभताम्। अशोभत। शोभेत। शोभिषीष्ट। अशोभिष्ट, अशुभत्। अशोभिष्यत।

## १२–क्षुभ = व्याकुलता, काँपना, क्षोभ ।

क्षोभते। चुक्षुभे। क्षोभिता। क्षोभिष्यते। क्षोभताम्। अक्षोभत। क्षोभेत। क्षोभिषीष्ट। अक्षोभिष्ट, अक्षुभत्। अक्षोभिष्यत।

## १३–णभ = हिंसा, दुःख देना ।

नभते। नेभे। नभिता। नभिष्यते । नभताम्। अनभत। नभेत। नभिषीष्ट। अनभिष्ट, अनभत्। अनभिष्यत।

## १४–तुभ = हिंसा।

तोभते, तुतुभे, तोभिता, तोभिष्यते। तोभताम्, अतोभत, तोभेत, तोभिषीष्ट, अतोभिष्ट, अतुभत्, अतोभिष्यत।

## १५–स्रंसु = रपटना, गिरना ।

स्रंसते। सस्रंसे। स्रंसिता। स्रंसिष्यते । स्रंसताम्। अस्रंसत। स्रंसेत । स्रंसिषीष्ट । अस्रंसिष्ट, अस्रसत्। अस्रंसिष्यत ।

## १६—भ्रंसु = नाश, नीचे गिरना ।

भ्रंसते । बभ्रंसे । भ्रंसिता । भ्रंसिष्यते । भ्रंसताम्। अभ्रंसत। भ्रंसेत । भ्रंसिषीष्ट अभ्रंसिष्ट, अभ्रसत् । अभ्रंसिष्यत ।

## १७—ध्वंसु = जाना गिरना ।

ध्वंसते । दध्वंसे । ध्वंसिता । ध्वंसिष्यते । ध्वंसताम् । अध्वंसत । ध्वंसेत । ध्वंसिषीष्ट । अध्वंसिष्ट, अध्वसत् । अध्वंसिष्यत ।

## १८—स्रंभु = विश्वास, भरोसा ।

स्रंभते । सस्रंभे । स्रंभिता । स्रंभिष्यते । स्रंभताम् । अस्रंभत । स्रंभेत । स्रंभिषीष्ट । अस्रंभिष्ट, अस्रभत् । अस्रंभिष्यत ।

## १९—वृतु = वर्तना, होना ।

वर्तते । ववृते । वर्तिता । वर्तिष्यते । वत्स्यर्ति, वत्स्यर्तः, वत्स्यर्न्ति । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवर्तिष्ट अवृतत् । अवर्तिष्यत, अवत्स्यर्त् ।

## २०—दद = देना ।

ददते । ददृदे दददाते दददिरे । दददिषे दददाथे दददिध्वे । दददे दददिवहे दददिमहे । ददिता । ददिष्यते । ददताम् । अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत ।

---

कक्षः = फूँस । मञ्जुलम् = मनोहर । पलाण्डुः = प्याज । लशुनम् = लहसन । ताम्बूलाधानम् = पानदान । सरटः = गिरगिट । प्रतीरम् = किनारा । प्रसाधनम् = सजावट । मज्जनम् = नहाना । नौवाहः = मल्लाह । शकटवाहः = गाड़ीवान । रथवाहः = रथवान । हलवाहः = हलवाला । पलाटः = मुद्ग, मूंग । वालिशः = बेवकूफ़ । प्रणाली = पनाला । वल्लकी = बीन । वल्लरी = बाल । गोष्ठी = सभा । भोज्यम् = खाने योग्य वस्तु

## भाषा बनाओ ।

मूर्खोऽपि शोभते तावद् यावत् किञ्चिन्न भाषते । चक्षुभे द्विषतां मनः । गजं नभते केसरी । स्रंसिष्यते पादोऽत्र । दर्पेण भ्रंसते ज्ञानी मानी ध्वंसते सुखात् । स्रंभेऽहं त्वयि सर्वदा । भक्षितेऽपि लशुने न शान्तो व्याधिः । नौवाहा नहि वर्तन्ते हलवाहस्य सन्निधौ । बालिशा बालका यूयम् ।

## संस्कृत बनाओ ।

यह गाड़ीवान फूंस का क्या करेगा । मूर्ख तब तक अच्छा लगता है जब तक कुछ बोलता नहीं । रघु की सेना को देख कर वैरियों का मन क्षुब्ध हुआ । यहाँ पैर रपटता है । अहङ्कार से ज्ञानी नष्ट होता है और घमण्डी सुख से नीचे गिरा करता है । मैं तुम्हारा सदा भरोसा रखता हूँ । लहसन खाने पर भी रोग शान्त नहीं हुआ । हल चलानेवाले के समीप मल्लाह नहीं है ।

## २१ त्रपूष् = लज्जा, शरम ।

त्रपते । त्रेपे । त्रपिता, त्रप्ता । त्रपिष्यते, त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट, त्रप्सीष्ट । अत्रपिष्ट अत्रपिषाताम् , अत्रपिषत, अत्रप्त अत्रप्साताम् अत्रप्सत । अत्रपिष्यत, अत्रप्स्यत ।

## अथोभयपदप्रकरणम् ।

## १ श्रिञ् = सेवा, सहारा लेना ।

श्रयते, श्रयति । शिश्रिये शिश्रियाते शिश्रियिरे, शिश्रियिषे शिश्रियाथे शिश्रियिध्वे, शिश्रिये शिश्रियिवहे शिश्रियिमहे । शिश्राय शिश्रियतुः शिश्रियुः शिश्रियथ शिश्रियथुः शिश्रिय शिश्राय, शिश्रय शिश्रियिव शिश्रियिम । श्रयितासे श्रयितासि । श्रयिष्यते श्रयिष्यति । श्रयताम् , श्रयतु । अश्रयन अश्रयत् । श्रयेत श्रयेत् । श्रयिषीष्ट, श्रीयात् । अशिश्रियत अशिश्रियताम् अशिश्रियन्त

अशिश्रियथाः अशिश्रियेथाम् अशिश्रियध्वम् अशिश्रिये अशिश्रियावहि अशिश्रियामहि। अशिश्रियत् अशिश्रियताम् अशिश्रियन्। अश्रयिष्यत, अश्रयिष्यत्।

## २ भृञ् = भरण, पोषण, पालन ।

भरते, भरति। बभ्रे बभ्राते बभ्रिरे, बभृषे बभ्राथे बभृढ्वे बभ्रे बभृवहे बभृमहे। बभार बभ्रतुः बभ्रुः, बभर्थ बभ्रथुः बभ्र, बभार, बभर बभृव बभृम। भर्त्तासे भर्त्तासि। भरिष्यते, भरिष्यति। भरताम्, भरतु। अभरत अभरत्। भरेत, भरेत्। भृषीष्ट भ्रियात्। अभृत अभृषाताम् अभृषत, अभृथाः अभृषाथाम् अभृढ्वम्, अभृषि अभृष्वहि अभृष्महि। अभार्षीत् अभार्ष्टाम् अभार्षुः, अभार्षीः अभार्ष्टम् अभार्ष्ट, अभार्षम् अभार्ष्व अभार्ष्म, अभरिष्यत, अभरिष्यत्।

## ३ हृञ् = हरण, चुराना ।

हरते, हरति। जह्रे जह्राते जह्रिरे जहृषे जह्राथे जहृढ्वे जह्रे जहृवहे जहृमहे। जहार जह्रतुः जह्रुः जहर्थ जह्रथुः जह्र जहार, जहर जहृव जहृम। हर्त्तासे, हर्त्तासि हरिष्यते। हरिष्यति। हरताम्, हरतु। अहरत। अहरत्, हरेत, हरेत्। हृषीष्ट ह्रियात्। अहृत, अहार्षीत्। अहरिष्यत। अहरिष्यत।

## ४ धृञ् = धारण, रखना ।

धरते, धरति। दध्रे दध्राते दध्रिरे, दधार दध्रतुः दध्रुः। धर्तासे, धर्तासि। धरिष्यते, धरिष्यति। धरताम् धरतु। अधरत, अधरत्। धरेत, धरेत्। धृषीष्ट, ध्रियात्। अधृत, अधार्षीत् अधरिष्यत, अधरिष्यत्।

## ५ णीञ् = प्रापण, लेजाना ।

नयते, नयति। निन्ये निन्याते निन्यिरे, निनाय निन्यतुः

निन्युः । नेतासे, नेतासि । नेष्यते, नेष्यति । नयताम् , नयतु । अनयत, अनयत् । नयेत, नयेत् । नेषीष्ट, नीयात् । अनेष्ट अनेषाताम् , अनेषत । अनैषीत् अनैष्टाम् अनैषुः । अनेष्यत, अनेष्यत् ।

## ६ डुपचष् = पकाना ।

पचते, पचति । पेचे पेचाते पेचिरे, पपाच पेचतुः पेचुः । पक्तासे, पक्तासि । पक्ष्यते, पक्ष्यति । पचताम् , पचतु । अपचत, अपचत् । पचेत, पचेत् । पक्षीष्ट, पच्यात् । अपक्त अपक्षाताम् अपक्षत, अपक्थाः अपक्षाथाम् अपग्ध्वम् , अपक्षि अपक्ष्वहि अपक्ष्महि । अपाक्षीत् अपाक्ताम् अपाक्षुः । अपाक्षीः अपाक्तम् अपाक्त अपाक्षम् अपाक्ष्व अपाक्ष्म । अपक्ष्यत, अपक्ष्यत् ।

## ७ भज = सेवा, भजन ।

भजते, भजति । भेजे भेजाते भेजिरे, बभाज भेजतुः भेजुः । भक्तासे, भक्तासि । भक्ष्यते, भक्ष्यति । भजताम् , भजतु । अभजत, अभजत् । भजेत, भजेत् । भक्षीष्ट, भज्यात् । अभक्त अभक्षाताम् अभक्षत । अभक्थाः अभक्षाथाम् अभग्ध्वम् । अभक्षि अभक्ष्वहि अभक्ष्महि । अभाक्षीत् अभाक्ताम् अभाक्षुः । अभक्ष्यत, अभक्ष्यत् ।

## ८ यज = देवपूजा, सङ्गतिकरण, दान ।

यजते, यजति । ईजे ईजाते ईजिरे, ईजिषे ईजाथे ईजिध्वे, ईजे ईजिवहे ईजिमहे । इयाज ईजतुः ईजुः । इयजिथ, इयष्ठ ईजथुः ईज, इयाज, इयज ईजिव ईजिम । यष्टासे, यष्टासि । यक्ष्यते, यक्ष्यति । यजताम् , यजतु । अयजत, अयजत् । यजेत, यजेत् । यक्षीष्ट, इज्यात् । अयष्ट अयक्षाताम् अयक्षत, अयष्ठाः अयक्षाथाम् अयग्ढ्वम् अयक्षि अयक्ष्वहि अयक्ष्महि । अयाक्षीत् अयाष्टाम् अयाक्षुः । अयक्ष्यत अयक्ष्यत् ।

## ६ वह = लेजाना, पहुँचाना; ढोना।

वहते, वहति। ऊहे ऊहाते ऊहिरे ऊहिषे ऊहाथे ऊहिध्वे ऊहे ऊहिवहे ऊहिमहे, उवाह ऊहतुः ऊहुः। उवहिथ, उवोढ ऊहथुः ऊह। उवाह, उवह ऊहिव ऊहिम। वोढा वोढारौ वोढारः वोढासे वोढासाथे वोढाध्वे वोढाहे वोढास्वहे वोढास्महे। वोढासि, वोढास्थः। वक्ष्यते,वक्ष्यति। वहताम् , वहतु। अवहत अवहत्। वहेत, वहेत्। वक्षीष्ट, उह्यात्। लुङ्–अवोढ अवक्षाताम् अवक्षत, अवोढाः अवक्षाथाम् अवोढ्वम् , अवक्षि अवक्ष्वहि अवक्ष्महि। अवाक्षीत् अवोढाम् अवाक्षुः, अवाक्षीः अवोढम् अवोढ अवाक्षम् अवाक्ष्व अवाक्ष्म। अवक्ष्यत, अवक्ष्यत्।

पारिषदः–परिषद्यः–सदस्यः = सभासद्,–मेम्बर। प्रश्रयः = प्रेम मोहब्बत। बीजम् = कारण। सम्भारः = आरम्भ, तय्यारी। ससम्भ्रमम् = सादर से। प्रेङ्खणम् = युद्ध। उपकण्ठम् = समीप। आवर्तनम् = विलोडन। अन्तरालम् = मध्य, बीच। अङ्गणम् = आँगन। विभ्रमः = विलास। शीतः = शीतल, ठण्डा। वैलक्ष्यम् = संकोच। पाण्डित्यम् = चतुराई। उपाख्यानम् = पुराना हाल बयान करना। नियोगः = आज्ञा। शमनम् = शान्ति।

## भाषा बनाओ।

ससम्भ्रमं स श्रयते न स्वामिनम्। काकोऽप्युदरं स्वम्भरते। धरते यो धुरं धर्म्यां तस्य राज्यं प्रतिष्ठते। पाकान् पचन्ति पाचकाः। भारं वहन्ति गर्दभाः। अग्ने! नय सुपथा राये। समोपकण्ठे न वहन्ति नद्यः। तवान्तराले चटकः प्रयाति।

## संस्कृत बनाओ।

वह आदर के साथ स्वामी की सेवा नहीं करता। कौवा भी अपने पेट को भर लेता है। धर्मयुक्त जो धुरा को धारण करता

है उसका राज्य चिरकाल तक ठहरता है। रसोइये पाक पकाते हैं। गदहे भारको ढोते हैं। हे परमात्मन्! धर्मरूपी धनके लिये अच्छे मार्ग से ले चल। मेरे पास नदियाँ नहीं बहती हैं।

इति भ्वादिगणप्रकरणम्।

## अथादादिगणप्रकरणम्।

### १ अद् = खाना।

लट्-अत्ति अत्तः अदन्ति, अत्सि अत्थः अत्थ, अद्मि अद्वः अद्मः। लिट्-आद आदतुः आदुः आदिथ, आत्थ आदथुः आद, आद आदिम आदिम। जघास जक्षतुः जक्षुः जघसिथ जक्षतुः जक्ष, जघास, जघस जक्षिव जक्षिम। लुट्—अत्ता अत्तारौ अत्तारः, अत्तासि अत्तास्थः अत्तास्थ अत्तास्मि अत्तास्वः अत्तास्मः। लृट्-अत्स्यति अत्स्यतः अत्स्यन्ति। लोट्—अत्तु अत्तात् अत्ताम् अदन्तु अद्धि, अत्तात् अत्तम् अत्त, अदानि अदाव अदाम। लङ्—आदत् आत्ताम् आदन्, आदः आत्तम् आत्त आदम् आद्व आद्म। वि० लिङ्-अद्यात् अद्याताम् अद्युः, अद्याः अद्यातम् अद्यात, अद्याम् अद्याव अद्याम। अद्यात् अद्यास्ताम् अद्यासुः। अघसत् अघसताम् अघसन्। आत्स्यत् आत्स्यताम् आत्स्यन्।

### २ हन् = हिंसा, दुःख, जाना, जानना, प्रापण।

लट्-हन्ति हतः घ्नन्ति, हंसि हथः हथ, हन्मि हन्वः हन्मः। लिट्-जघान जघ्नतुः जघ्नुः, जघनिथ, जघन्थ जघ्नथुः जघ्न जघान, जघन जघ्निव जघ्निम। लुट्-हन्ता हन्तारौ हन्तारः। लृट्—हनिष्यति। लोट्-हन्तु, हतात् हताम् घ्नन्तु जहि, हतात् हतम् हत हनानि हनाव हनाम। लङ्-अहन् अहताम् अघ्नन्, अहन् अहतम् अहत, अहनम् अहन्व अहन्म। विधि लिङ्-हन्यात् हन्याताम् हन्युः हन्याः हन्यातम् हन्यात हन्याम्

हन्याव हन्याम । आ० लिङ्—वध्यात् वध्यास्ताम् वध्यासुः वध्याः वध्यास्तम् वध्यास्त, वध्यासम् वध्यास्व वध्यास्म । लुङ्—अवधीत् अवधिष्टाम् अवधिषुः, अवधीः अवधिष्टम् अवधिष्ट, अवधिषम् अवधिष्व अवधिष्म । लृङ्—अहनिष्यत् अहनिष्यताम् अहनिष्यन् ।

## ३ यु = मिलाना, व पृथक् करना ।

यौति युतः युवन्ति । यौषि युथः युथ । यौमि युवः युमः । युयाव, युयुवतुः युयुवुः युयुविथ, युयोथ युयुवथुः युयुव । युयाव, युयुव युयुविव युयुविम । यविता । यविष्यति । यौतु युतात् युताम् युवन्तु, युहि युतात् युतम् युत, यवानि यवाव यवाम । अयौत् अयुताम् अयुवन्, अयौः अयुतम् अयुत अयुवम् अयुव अयुम । युयात् युयाताम् युयुः, युयाः युयातम् युयात, युयाम् युयाव युयाम । यूयात् यूयास्ताम् यूयासुः । अयावीत् अयाविष्टाम् अयाविषुः, अयावीः अयाविष्टम् अयाविष्ट अयाविषम् अयाविष्व अयाविष्म । अयाविष्यत् ।

## ४ या = प्रापण, पाना, पहुँच जाना ।

याति यातः यान्ति, ययौ ययतुः ययुः ययिथ, ययाथ ययथुः यय, ययौ ययिव ययिम । याता । यास्यति । यातु यातात् याताम् यान्तु, याहि, यातात् यातम् यात, यानि याव याम । अयात् अयाताम् अयुः, अयान् अयः अयातम् अयात, अयाम् अयाव अयाम । यायात् यायाताम् यायुः, यायाः यायातम् यायात, यायाम् यायाव यायाम । यायात् यायास्ताम् यायासुः । अयासीत् अयासिष्टाम् अयासिषुः अयासीः अयासिष्टम् अयासिष्ट, अयासिषम् अयासिष्व अयासिष्म । अयास्यत् ।

## ५ वा = गति, सूंघना ।

वाति । ववौ ववतुः ववुः । वाता । वास्यति । वातु । अवात् । वायात् । वायाताम् वायुः। वायात् वायास्ताम् वायासुः। अवासीत् अवासिष्टाम् अवासिषुः । अवास्यत् ।

## संस्कृत बनाओ ।

आधे लड़के खाते हैं और आधे पाठशाला को जाते हैं । आज चारों चोरों को अवश्य मैं मारूँगा । विद्वानों में मूर्खों को क्यों मिलाते हो । कल मैं शाम को प्रयाग पहुँचूंगा । हवायें चलती हैं और चलेंगी । हमने इन लड़कों को कभी भी नहीं मारा । उसने दुश्मन को लड़ाई में मारा ।

## भाषा बनाओ ।

नेमे अदन्ति बाला नेमे पाठशालां प्रयान्ति । अद्य चतुरश्चौरान् हनिष्यामि । विद्वत्सु मूर्खान् युयात यूयम् । प्रयागं श्वोहं यातास्मि । वायवो वान्ति वास्यन्ति । इमान् बालान् वयं कदापि नावधिष्म । स शत्रुं रणे अवधीत् । कथं हनानि स्वमित्राणि ?

## ६ भा = प्रकाश, चमक, रोशनी ।

भाति भातः भान्ति । बभौ बभतुः बभुः । भाता । भास्यति । भातु । अभात् । भायात् भायाताम् भायुः । भायात् भायास्ताम् भायासुः । अभासीत् अभासिष्टाम् अभासिषुः अभास्यत् ।

## ७ ष्णा = पवित्रता, स्नान, नहाना ।

स्नाति । सस्नौ सस्नतुः सस्नुः । स्नाता । स्नास्यति । स्नातु । अस्नात् । स्नायात् स्नायाताम् स्नायुः । स्नायात् स्नायास्ताम् स्नायासुः, स्नेयात् स्नेयास्ताम् स्नेयासुः । अस्नासीत् अस्नासिष्टाम् अस्नासिषुः । अस्नास्यत् ।

## ८ श्रा = पकाना ।

श्राति । शश्रौ शश्रतुः शश्रुः । श्राता । श्रास्यति । श्रातु । अश्रात् । श्रायात् । श्रायात्, श्रेयात् । अश्रासीत् अश्रासिष्टाम् अश्रासिषुः । अश्रास्यत् ।

## ९ द्रा = बुरा चलन, निन्दा ।

द्राति । दद्रौ । द्राता । द्रास्यति । द्रातु । अद्रात् । द्रायात् द्रायात्, द्रेयात् । अद्रासीत् । अद्रास्यत् ।

## १० प्सा = खाना ।

प्साति । पप्सौ । प्साता । प्सास्यति । प्सातु । अप्सात् । प्सायात् । प्सायात्, प्सेयात् । अप्सासीत् । अप्सास्यत् ।

## ११ रा = देना ।

राति । ररौ । राता । रास्यति । रातु । अरात् । रायात् । रायात् । अरासीत् अरास्यत् ।

## १२ ला = लेना ।

लाति । ललौ । लाता । लास्यति । लातु । अलात् लायात् लायात् । अलासीत् । अलास्यत् ।

## १३ दाप् = काटना ।

दाति । ददौ । दाता । दास्यति । दातु । अदात् । दायात् । दायात् । अदासीत् । अदास्यत् । एवं "पा"

## १४ ख्या = कहना, बोलना ।

ख्याति । ख्यातु । अख्यात् । ख्यायात् । इस धातु का सार्वधातुक में ही प्रयोग होता है ।

## १५ विद् = जानना ।

वेत्ति वित्तः विदन्ति, वेत्सि वित्थः वित्थ, वेद्मि विद्वः विद्मः । वेद विदतुः विदुः वेत्थ विदथुः विद वेद विद्व विद्म । लिट्-विदाञ्चकार विदाञ्चक्रतुः विदाञ्चक्रुः, विदाञ्चकर्थ विदाञ्चक्रथुः विदाञ्चक्र विदाञ्चकार, विदाञ्चकर विदाञ्चकृव विदाञ्चकृम । विवेद विविदतुः विविदुः । वेदिता । वेदिष्यति । वेत्तु । अवेत् अवित्ताम् अविदुः । विद्यात् विद्याताम् विद्युः । विद्यात् विद्यास्ताम् विद्यासुः । अवेदीत् । अवेदिष्यत् ।

प्रस्थानम् = जाना । गोपनम् = छिपाना, रक्षा । निधनम् = मृत्यु, नाश । लाञ्छनम् = कलङ्क, चिह्न । आयतनम् = स्थान । निभृतम् = चुपचाप । निवहः-समूह । विहारः = क्रीडा । समवायः = समूह, नित्य सम्बन्ध । वालेयः = गदहा । वैश्वानरः = अग्नि । आनुश्रविकः । वैदिक । निर्वेदः = वैराग्य । गरलम् = विष । पीयूषम् = अमृत । सागरः = समुद्र ।

## भाषा बनाओ ।

न तत्र सूर्यो भाति न चन्द्रतारकम् । स्नास्यन्ति न नदीजले । संयावं श्रान्ति पाचकाः । दसामि पक्वानि फलानि सर्वदा । दास्यामि वेदं गुरवे कृपालवे । लास्यन्ति ते सम्प्रति राजधानीम् । न दान्तु वृत्तान् मम सागरस्य । अख्युस्ते शोभनं वचः । वेत्ति सर्वाणि शास्त्राणि गर्वो यस्य न विद्यते । वैश्वानरो-यतते सूर्येण । वालेयाः कुम्भकारस्य क्षेत्रे चरन्ति धावत ।

## संस्कृत बनाओ ।

न वहाँ सूर्य चमकता है न चन्द्र और न तारे । वे नदी के पानी में नहीं नहावेंगे । रसोइये हलवा पकाते हैं । मैं सदा पके हुये फलों को खाता हूँ । कृपालु गुरुजी के लिये वेद को दूँगा ।

इस समय वे राजधानी लेंगे। मेरे समुद्र के तट के वृक्षों को न काटो। उन्होंने अच्छा वचन कहा। वह सब शास्त्रों को जानता है जिसको अहङ्कार नहीं है। अग्नि सूर्य द्वारा यत्न करता है।

## १६ अस = होना, सत्ता ।

अस्ति स्तः सन्ति। लोट्-अस्तु स्तात् स्ताम् सन्तु एधि स्तात् स्तम् स्त असानि असाव असाम। लङ् आसीत् आस्ताम् आसन् आसीः आस्तम् आस्त आसम् आस्व आस्म। वि० लिङ्-स्यात् स्याताम् स्युः स्याः स्यातम् स्यात स्याम् स्याव स्याम। शेष लकारों के रूप भू के सदृश होते हैं।

## १७ इण् = चलना, जाना ।

एति इतः यन्ति। एषि इथः इथ। एमि इवः इमः। इयाय ईयतुः ईयुः। इययिथ, इयेथ ईयथुः ईय। इयाय, इयय ईयिव ईयिम। एता एतारौ एतारः। एष्यति। एतु, इतात् इताम् यन्तु इहि इतात् इतम् इत अयानि अयाव अयाम। ऐत् ऐताम् आयन् ऐः ऐतम् ऐत आयम् ऐव ऐम। इयात् इयाताम् इयुः इयाः इयातम् इयात इयाम् इयाव इयाम। ईयात् ईयास्ताम् ईयासुः ईयाः ईयास्तम् ईयास्त ईयासम् ईयास्व ईयास्म। अगात् अगाताम् अगुः अगाः अगातम् अगात अगाम् अगाव अगाम। ऐष्यत् ऐष्यताम् ऐष्यन्।

## अथात्मनेपदप्रकरणम् ।

## १८ शीङ् = सोना, नींद ।

शेते। लिट्-शिश्ये शिश्याते शिश्यिरे शिश्यिषे शिश्याथे शिश्यिध्वे, शिश्यिढ्वे शिश्ये शिश्यिवहे शिश्यिमहे। शयिता शयितारौ शयितारः शयितासे शयितासाथे शयिताध्वे शयिताहे शयितास्वहे शयितास्महे। शयिष्यते शयिष्येते शयिष्यन्ते। शेताम्

शयाताम् शेरताम् । अशेत अशयाताम् अशेरत अशेथाः अशयाथाम् अशेध्वम् अशयि अशेवहि अशेमहि । शयीत शयीयाताम् शयीरन् शयीथाः शयीयाथाम् शयीध्वम् शयीय शयीवहि शयीमहि । शयिषीष्ट शयिषीयास्ताम् शयिषीरन् शयिषीष्ठाः शयिषीयास्थाम् शयिषीढ्वम्, शयिषीध्वम् शयिषीय शयिषीवहि शयिषीमहि । अशयिष्ट अशयिषाताम् अशयिषत । अशयिष्यत ।

## १६ इङ् = अध्ययन, पढ़ना ।

अधीते अधीयाते अधीयते, अधीषे अधीयाथे अधीध्वे, अधीये अधीवहे अधीमहे । अधिजगे अधिजगाते अधिजगिरे, अधिजगिषे अधिजगाथे अधिजगिध्वे अधिजगे अधिजगिवहे अधिजगिमहे । अध्येता अध्येतारौ अध्येतारः । अध्येष्यते अध्येष्येते अध्येष्यन्ते । अधीताम् अधीयाताम् अधीयताम् । अधीष्व अधीयाथाम् अधीध्वम् अध्ययै अध्ययावहै अध्ययामहै । लङ्—अध्यैत अध्यैयाताम् अध्यैयत अध्यैथाः अध्यैयाथाम् अध्यैध्वम् अध्यैयि अध्यैवहि अध्यैमहि । अधीयीत अधीयीयाताम् अधीयीरन् अधीयीथाः अधीयाथाम् अधीयीध्वम् अधीयीय अधीयीवहि अधीयीमहि । अध्येषीष्ट अध्येषीयास्ताम् अध्येषीन् अध्येषीष्ठाः अध्येषीयास्थाम् अध्येषीढ्म् अध्येषीय अध्येषीवहि अध्येषीमहि । लुङ्—अध्यैष्ट अध्यैषाताम् अध्यैषत अध्यैष्ठाः अध्यैषाथाम् अध्यैढ्वम् अध्यैषि अध्यैष्वहि अध्यैष्महि अध्यगीष्ट अध्यगीषाताम् अध्यगीषत अध्यगीष्ठाः अध्यगीषाथाम् अध्यगीढ्वम् अध्यगीषि अध्यगीष्वहि अध्यगीष्महि । अध्येष्यत, अध्यगीष्यत ।

नामधेयम् = नाम । भागधेयम् = भाग्य । स्वल्पम् = कम । निग्रहः = मरण, मरना, सज़ा । लज्जमानः = शर्मिन्दा । दारकः = बालक । मिश्रः = श्रेष्ठ । अलीकम् = मिथ्या निष्फल, झूठ ।

मैरेयम् = मद्य, नशा । वैहासिकः = दिल्लगीबाज़ । सस्त्रीकः = स्त्री के साथ । कर्णेजपः = चुगलखोर । आयोधनम् = संग्राम । आटोपः = अवलेप, गर्व । मङ्गलसंवादः = खुशखबरी ।

## भाषा बनाओ ।

आसीद् विशेषा फलपुष्पवृद्धिः । सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट । विद्वत्सभां मूढजना न यन्ति । के शेरते पृच्छति कोटपालः । अधीमहि सम्प्रति न्यायशास्त्रम् । कर्णेजपस्य वचनं नहि ते शृणवन्ति । अयं न वैहासिक एष्यति प्रभो ! वयं वेदानध्यगीष्महि । आर्यमिश्रा वन्दनीया भवन्ति ।

## संस्कृत बनाओ ।

फल और फूलों की विशेष वृद्धि हुई । दशरथ ने वेदों को पढ़ा था और देवों का सत्कार किया था । विद्वानों की सभा में मूर्ख लोग नहीं जाते । कौन सोते हैं कोतवाल पूछते हैं । इस समय हम न्यायशास्त्र को पढ़ते हैं । वे चुगलखोर की बातें नहीं सुनते । हे स्वामिन् ! यह दिल्लगीबाज़ नहीं आवेगा । ये लड़के आज क्या पढ़ेंगे । हमने वेदों को पढ़ लिया ।

## अथोभयपदप्रकरणम् ।

## २० दुह = दुहना, भरना ।

लट् दोग्धि दुग्धः दुहन्ति, धोक्षि दुग्धः दुग्ध, दोह्मि दुह्वः दुह्मः । दुग्धे दुहाते दुहते धुक्षे दुहाथे धुग्ध्वे दुहे दुह्वहे दुह्महे । लिट्—दुदोह दुदुहतुः दुदुहुः दुदोहिथ दुदुहथुः दुदुह दुदोह दुदुहिव दुदुहिम । दुदुहे दुदुहाते दुदुहिरे दुदुहिषे दुदुहाथे दुदुहिध्वे, दुदुहिढ्वे दुदुहे दुदुहिवहे दुदुहिमहे । लुट्—दोग्धा दोग्धारौ दोग्धारः दोग्धासि । दोग्धासे । धोक्ष्यति धोक्ष्यते । लोट् दोग्धु दुग्धात् दुग्धाम् दुहन्तु दुग्धि दुग्धात् दुग्धम् दुग्ध दोहानि दोहाव दोहाम । दुग्धाम् दुहाताम् दुहताम् धुक्ष्व दुहाथाम्

अग्ध्वम् दोहै दोहावहै दोहामहै । लङ्—अधोग्-क् अदुग्धाम् अदुहन् अधोग्-क् अदुग्धम् अदुग्ध अदोहम् अदुह्व अदुह्म । अदुग्ध अदुहाताम् अदुहत अदुग्धाः अदुहाताम् अदुग्ध्वम् अदुहि अदुह्वहि अदुह्महि । वि० लि०-दुह्यात् दुह्याताम् दुह्युः। दुहीत दुहीयाताम् दुहीरन् । आ०लिङ्-दुह्यात् दुह्यास्ताम् दुह्यासुः । धुक्षीष्ट धुक्षीयास्ताम् धुक्षीरन् । लुङ् । अधुक्षत् अधुक्षताम् अधुक्षन् । अधुक्षत अदुग्ध, अधुक्षाताम् अधुक्षन्त अधुक्षथाः अदुग्धाः अधुक्षाथाम् अधुक्षध्वम्,अदुग्ध्वम् अधुक्षि अधुक्षावहि अदुह्वहि अधुक्षामहि अदुह्महि । लृङ्—अधोक्ष्यत् अधोक्ष्यत ।

## २१ दिह् = वृद्धि, बढ़ा ।

देग्धि दिग्धः दिहन्ति धेक्षि दिग्धः दिग्ध देह्मि दिह्वः दिह्मः दिग्धे दिहाते दिहते धिक्षे दिहाथे धिग्ध्वे दिहे दिह्वहे दिह्महे । लिट्—दिदेह दिदिहतुः दिदिहुः दिदेहिथ, दिदिहथुः दिदिह दिदेह दिदिहिव दिदिहिम । दिदिहे दिदिहाते दिदिहिरे दिदिहिषे दिदिहाथे दिदिहिध्वे दिदिहे दिदिहिवहे दिदिहिमहे । लुट्-देग्धा देग्धारौ । देग्धारः । देग्धासे । लृट्—धेक्ष्यति । लोट्-देग्धु दिग्धाम् दिहन्तु । लङ्-अधेग् क् , अदिग्ध । वि० लिङ्-दिह्यात् दिह्याताम् दिह्युः । दिहीत दिहियाताम् दिहीरन् । आ० लिङ्—दिह्यात् दिह्यास्ताम् दिह्यासुः । धिक्षीष्ट धिक्षीयास्ताम् धिक्षीरन् । लुङ् अधिक्षत् अधिक्षाताम् अधिक्षन् अधिक्षत, अदिग्ध अधिक्षाताम् अधिक्षन्त अधिक्षथाः,अदिग्धाः लृङ्—अधेक्ष्यत् अधेक्ष्यत । दुह धातु के तुल्य ही दिह के भी सर्वत्र रूप समझने चाहियें ।

## २२ लिह् = स्वाद लेना, चाटना ।

लट् लेढि लीढः लिहन्ति लेक्षि लीढः लीढ लेह्मि लिह्वः लिह्मः । लीढे लिहाते लिहते लिक्षे लिहाथे लीढ्वे लिहे लिह्वहे

लिह्महे । लिट्-लिलेह लिलिहतुः लिलिहुः लिलेहिथ लिलिहथुः लिलिह लिलेह लिलिहिव लिलिहिम । लिलिहे लिलिहाते लिलिहिरे लिलिहिषे लिलिहाथे लिलिहिध्वे लिलिहे लिलिहिवहे लिलिहिमहे । लुट्-लेढा लेढारौ लेढारः । लेढासे । लृट्-लेक्ष्यति लेक्ष्यते । लोट्-लेढु लीढाम् लिहन्तु लीढि, लीढात् लीढम् लीढ लेहानि लेहाव लेहाम लीढाम् लिहाताम् लिहताम् लिक्ष्व लिहाथाम् लीढ्वम् लेहै लेहावहै लेहामहै । लङ्-अलेड् ट् अलीढाम् अलिहन् अलेड्ट् अलीढम् अलीढ अलेहम् अलिह्व अलिह्म अलीढ अलिहाताम् अलिहत अलीढाः अलिहाथाम् अलीढ्वम् अलिहि अलिह्वहि अलिह्महि । वि० लिङ्—लिह्यात् । लिहीत लिहीयाताम् लिहीरन् । आ०लिङ् लिह्यात् लिह्यास्ताम् लिह्यासुः । लिक्षीष्ट लिक्षीयास्ताम् लिक्षीरन् । लुङ्-अलिक्षत् अलिक्षताम् अलिक्षन् । अलिक्षत, अलीढ अलिक्षाताम् अलिक्षन्त अलिक्षथाः, अलीढाः अलिक्षाथाम् अलिक्षध्वम्, अलीढ्वम् अलिक्षि अलिक्षावहि अलिक्षामहि । लृङ्-अलेक्ष्यत् । अलेक्ष्यत ॥

## २३ ब्रूञ् = स्पष्ट बोलना ।

लट्—आह आहतुः आहुः आत्थ आहथुः । ब्रवीति ब्रूतः ब्रुवन्ति ब्रवीषि ब्रूथः ब्रूथ ब्रवीमि ब्रूवः ब्रूमः। ब्रूते ब्रुवाते ब्रुवते ब्रूषे ब्रुवाथे ब्रूध्वे ब्रुवे ब्रूवहे ब्रूमहे । लिट्—उवाच ऊचतुः ऊचुः उवचिथ उवक्थ ऊचथुः ऊच उवाच, उवच ऊचिव ऊचिम । ऊचे ऊचाते ऊचिरे ऊचिषे ऊचाथे ऊचिध्वे ऊचे ऊचिवहे ऊचिमहे । वक्ता । वक्तासे । वक्ष्यति । वक्ष्यते । ब्रवीतु ब्रूहि ब्रवाणि । ब्रूताम् ब्रुवाताम् ब्रुवताम् ब्रूष्व ब्रुवाथाम् ब्रूध्वम् ब्रवै ब्रवावहै ब्रवामहै । अब्रवीत् अब्रूताम् अब्रुवन् । अब्रवीः अब्रूतम् अब्रूत अब्रवम् अब्रूव अब्रूम । अब्रूत अब्रुवाताम् अब्रुवत अब्रूथाः अब्रुवाथाम् अब्रूध्वम् अब्रुवि अब्रूवहि अब्रूमहि । ब्रूयात् ब्रूया-

ताम् ब्रूयुः । ब्रुवीत ब्रुवीयाताम् ब्रुवीरन् । उच्यात् उच्यास्ताम् उच्यासुः । वक्षीष्ट वक्षीयास्ताम् वक्षीरन् । अवोचत् अवोचताम् अवोचन् । अवोचत अवोचेताम् अवोचन्त । अवक्ष्यत्, अवक्ष्यत ।

## २४ ऊर्णुञ् = आच्छादन, ढांकना ।

लट्–ऊर्णौति, ऊर्णोति ऊर्णुतः ऊर्णुवन्ति ऊर्णौषि, ऊर्णोषि ऊर्णुथः ऊर्णुथ, ऊर्णौमि ऊर्णोमि ऊर्णुवः ऊर्णुमः । ऊर्णुते ऊर्णुवाते ऊर्णुवते ऊर्णुषे ऊर्णुवाथे ऊर्णुध्वे ऊर्णुवे ऊर्णुवहे ऊर्णुमहे । लिट्–ऊर्णुनाव ऊर्णुनुवतुः ऊर्णुनुवुः ऊर्णुनुविथ, ऊर्णुनविथ ऊर्णुनुवथुः ऊर्णुनुव, ऊर्णुनाव, ऊर्णुनव ऊर्णुनुविव ऊर्णुनुविम ऊर्णुनुवे ऊर्णुनुवाते, ऊर्णुनुविरे ऊर्णुनुविषे ऊर्णुनुवाथे ऊर्णुनुविध्वे ऊर्णुनुवे ऊर्णुनुविवहे ऊर्णुनुविमहे । ऊर्णविता ऊर्णुविता । ऊर्णुवितासे, ऊर्णुवितासे । ऊर्णुविष्यति ऊर्णविष्यति ऊर्णुविष्यते ऊर्णविष्यते । ऊर्णौतु, ऊर्णोतु ऊर्णुहि ऊर्णवानि ऊर्णवाव ऊर्णवाम । ऊर्णुताम् ऊर्णुवाताम् ऊर्णुवताम् ऊर्णुष्व ऊर्णुवाथाम् ऊर्णुध्वम् । ऊर्णवै ऊर्णवावहै ऊर्णवामहै । लङ्–और्णोत् और्णुताम् और्णुवन् । और्णुत और्णुवाताम् और्णुवत । वि०लिङ्–ऊर्णुयात् ऊर्णुयाताम् ऊर्णुयुः । ऊर्णुवीत ऊर्णुवीयाताम् ऊर्णुवीरन् । आ०लिङ्–ऊर्णूयात् ऊर्णूयास्ताम् ऊर्णूयासुः । ऊर्णुविषीष्ट ऊर्णुविषीयास्ताम् ऊर्णुविषीरन् । ऊर्णविषीष्ट ऊर्णविषियास्ताम् ऊर्णविषीरन् । लुङ्–और्णावीत् और्णाविष्टाम् और्णाविषुः । और्णवीत् और्णविष्टाम् और्णविषुः । और्णुवीत् और्णुविष्टाम् और्णुविषुः । और्णुविष्ट और्णुविषाताम् और्णुविषत, और्णविष्ट और्णविषाताम् और्णविषत । लृङ्–और्णुविष्यत् । और्णविष्यत् । और्णुविष्यत और्णविष्यत ।

लवङ्गम् = लौंग । पल्वलम् = तलैया । पललम् = मांस सलिलम् = पानी । ललाटम् = माथा । वर्तिः = बत्ती । वर्तकः = बटेर । निदाघः = गर्मी का समय । निःसंज्ञः = बेहोश । शूर्पः = सूप । वदनम् = मुख । सदनम् = स्थान । सौरभ्यम् = सुगन्धि । चालचरः = स्काउट । पर्जन्यः = मेघ । शिविरम् = छावनी । उपद्रवः = उत्पात, जुल्म । व्यजनम् = पङ्खा । प्रक्षालनम् = धोना । सविधम् = समीप । तूलम् = रुई । घोषितम् = ढंढोरा पिटगया । तृष्णा = लोभ । धिषणा = बुद्धि । धनादेशः = मनीआर्डर । कमण्डलुः = लोटा । इत्थङ्कारम् = इस तरह । उद्यानम् = बाग़ ।

## भाषा बनाओ ।

दुहन्ति धेनूः पुरुषा मदीयाः । देग्धि क्षीरेण पौरुषम् । लिहन्ति धेनवो वत्सान् । रसं लीढि रुषं जहि । स्वस्तये वायुमुपब्रवामहे । ब्रवीमि सत्यं सदने पठामि । लवङ्गतैलस्य भविष्यति किम् ? ऊर्णोतु वस्त्रेण मुखं स्वकीयम् । प्रत्यवसानाय व्रजन्ति ब्राह्मणाः । पीडा ललाटे कथमस्ति ते वटो ! वर्त्तिर्नो दीपके तैलं शयेऽहंत्वमधीयीथाः । अन्धकवर्त्तकीयेन कार्यं न्यायेन सिध्यति । तृष्णे देवि ! नमस्तुभ्यम् । उपद्रवो नहि कर्त्तव्यः ।

## संस्कृत बनाओ ।

हमारे आदमी गौओं को दुहते हैं । दूध से पुरुषार्थ बढ़ता है । गायें बछड़ों को चाटती हैं । तू रस को चाट और क्रोध को छोड़ । कल्याणार्थ वायु का हम सम्यक् व्याख्यान करें । मैं सच कहता हूँ कि घर पर पढ़ता हूँ । लौंग के तेल का क्या होगा । आप कपड़े से अपने मुख को ढाँक लें । भोजन के लिये ब्राह्मण जाते हैं । ब्रह्मचारिन् ! तेरे माथे में पीड़ा क्यों है ? मेरे दीपक में न बत्ती है और न तेल अतएव मैं सोता हूँ और तू पढ़ । 'अन्धे की बटेर' इस न्याय से कार्य सिद्ध होता है ।

# अथ जुहोत्यादिगणप्रकरणम् ।

## १ हु = देना, लेना, होमकरना ।

लट्-जुहोति जुहुतः जुह्वति जुहोषि जुहुथः जुहुथ जुहोमि जुहुवः जुहुमः । लिट्-जुहवाञ्चकार जुहवाञ्चक्रतुः जुहवाञ्चक्रुः । जुहवाम्बभूव ।जुहवामास । जुहाव जुहुवतुः जुहुवुः जुहोथ जुहुविथ जुहुवथुः जुहुव जुहाव, जुहुव जुहुविव जुहुविम । होता । होष्यति । लोट्-जुहोतु,जुहुतात् जुहुताम् जुह्वतु जुहुधि जुहुतात् जुहुतम् जुहुत जुहवानि जुहवाव जुहवाम । अजुहोत् अजुहुताम् अजुहवुः अजुहोः अजुहुतम् अजुहुत अजुहवम् अजुहुव अजुहुम । विधिलिङ्-जुहुयात् जुहुयाताम् जुहुयुः जुहुयाः जुहुयातम् जुहुयात जुहुयाम् जुहुयाव जुहुयाम । आ० लिङ्-हूयात् हूयास्ताम् हूयासुः । लुङ्-अहौषीत् अहौष्टाम् अहौषुः अहौषीः अहौष्टम् अहौष्ट अहौषम् अहौष्व अहौष्म । लृङ्-अहोष्यत् ।

## २ ञि–भी = भयकरना, डरना ।

लट्—बिभेति बिभितः, बिभीतः बिभ्यति, बिभेषि बिभिथः बिभीथः बिभिथ, बिभीथ, बिभेमि बिभिवः, बिभीवः बिभिमः बिभीमः । लिट्-बिभयाञ्चकार । बिभयाम्बभूव । बिभयामास । बिभाय बिभ्यतुः बिभ्युः,बिभेथ,बिभयिथ बिभ्यथुः बिभ्य बिभाय बिभय बिभ्यिव बिभ्यिम । लुट्-भेता । लृट्-भेष्यति । लोट्-बिभेतु बिभितात् , बिभीतात् , बिभिताम् , बिभीताम् बिभ्यतु बिभिहि, बिभीहि बिभितात् , बिभीतात् बिभितम् , बिभीतम् बिभित, बिभीत, बिभयानि बिभयाव बिभयाम। लङ्-अबिभेत् अबिभिताम् , अबिभीताम् अबिभयुः अबिभेः, अबिभितम्,अबिभीतम् अबिभित, अबिभीत अबिभयम् अबिभिव, अबिभीव अबिभिम, अबिभीम । वि० लिङ्-बिभियात् , बिभीयात् बिभियाताम्,बिभीयाताम्बिभियुः,बिभीयुःबिभियाः,बिभीयाः बिभि-

यातम् बिभीयातम् बिभियात, बिभीयात बिभियाम् बिभीयाम्
द्बिभियाव, बिभीयाव बिभियाम बिभीयाम। आ० लिङ -भीयात्
भीयास्ताम् भीयासुः। लुङ्-अभैषीत् अभैष्टाम् अभैषुः। अभेष्यत्

## ३ ह्री = लज्जा, शर्म ।

लट्-जिह्रेति जिह्रीतः जिह्रियति, जिह्रेषि जिह्रीथः जिह्रीथ
जिह्रेमि जिह्रीवः जिह्रीमः। लिट्-जिह्रयाञ्चकार । जिह्रयाम्ब-
भूव । जिह्रयामास। जिह्राय जिह्रियतुः जिह्रियुः जिह्रेथ, जिह्र-
यिथ जिह्रियथुः जिह्रिय जिह्राय, जिह्रय जिह्रियिव जिह्रियिम ।
ह्रेता । ह्रेष्यति । जिह्रेतु जिह्रीतात् जिह्रीताम् जिह्रीयतु जि-
ह्रीहि, जिह्रीतात् जिह्रीतम् जिह्रीत जिह्रयाणि जिह्रयाव जिह्रयाम ।
लङ् अजिह्रेत् अजिह्रीताम् अजिह्रियुः अजिह्रेः अजीह्रीतम्
अजिह्रीत अजिह्रयम् अजिह्रीव अजिह्रीम ।वि० लिङ्-जिह्रीयात्
जिह्रीयाताम् जिह्रीयुः ।आ० लिङ् ह्रीयात् ह्रीयास्ताम् ह्रीयासुः ।
अह्रैषीत् अह्रैष्टाम् अह्रैषुः । अह्रेष्यत् ।

## ४ पॄ = पालना, पूरा करना, भरना ।

लट्-पिपर्त्ति पिपूर्त्तः पिपुरति पिपर्षि पिपूर्थः पिपूर्थ पिपर्मि
पिपूर्वः पिपूर्मः। लिट्-पपार पप्रतुः, पपरतुः पप्रुः, पपरुः पप-
रिथ पप्रथुः पपरथुः पप्र पपार, पपर पप्रिव पपरिव पप्रिम,
पपरिम । लुट्—परिता परीता । लृट्—परिष्यति, परीष्यति ।
लोट् पिपर्त्तु पिपूर्त्तात् पिपूर्त्ताम् पिपरतु पिपूर्हि, पिपूर्तात्
पिपूर्तम् पिपूर्त पिपराणि पिपराव पिपराम । लङ्—अपिपः
अपिपूर्ताम् अपिपरुः । अपिपः अपिपूर्तम् अपिपूर्त । अपिपरम्
अपिपूर्व अपिपूर्म । वि० लिङ्—पिपूर्यात् पिपूर्याताम् । पिपुर्युः।
पिपूर्याः पिपूर्यातम् पिपूर्यात पिपूर्याम् पिपूर्याव पिपूर्याम । आ०
लिङ्-पूर्यात् पूर्यास्ताम् पूर्यासुः पूर्याः पूर्यास्तम् पूर्यास्त पूर्या-
सम् पूर्यास्व पूर्यास्म । लुङ्—अपारीत् अपारिष्टाम् अपारिषुः
लृङ्—अपरिष्यत्, अपरीष्यत् ।

## ५ ओहाक् 'हा' = त्याग, छोड़ना।

लट्-जहाति जहितः जहीतः जहति। जहासि जहिथः जहीथः जहिथ, जहीथ । जहामि जहिवः जहीवः जहिमः जहीमः। लिट्—जहौ जहतुः जहुः जहिथ,जहाथ जहथुः जह जहौ जहिव जहिम । हाता।हास्यति। जहातु,जहितात्,जहीतात् जहिताम्, जहीताम् जहतु जहाहि जहिहि, जहीहि जहितम्, जहीतम् जहित, जहीत जहानि जहाव जहाम। लङ्-अजहात् अजहिताम् अजहीताम् अजहुः अजहाः अजहितम्, अजहीतम् अजहित अजहीत अजहाम् अजहिव, अजहीव अजहिम अजहीम। वि० लिङ् जह्यात् जह्याताम् जह्युः। आ० लिङ्-हेयात् हेयास्ताम् हेयासुः लुङ्-अहासीत् अहासिष्टाम् अहासिषुः। लृङ्-अहास्यत्।

### अथात्मनेपदिनः।

## ६ माङ् = मान, नापना, तोलना।

लट्-मिमीते मिमाते मिमते मिमीषे मिमाथे मिमीध्वे मिमे-मिमीवहे मिमीमहे। लिट्-ममे ममाते ममिरे ममीषे ममाथे ममीध्वे ममे ममिवहे ममिमहे। माता। मास्यते। लोट्-मिमीताम् मिमाताम् मिमताम् मिमीष्व मिमाथाम् मिमीध्वम् मिमै मिमावहै मिमामहै। लङ्-अमिमीत अमिमाताम् अमिमत अमिमीथाः अमिमाथाम् अमिमीध्वम् अमिमि अमिमीवहि अमिमीमहि। वि० लिङ्-मिमीत मिमीयाताम् मिमीरन्। मासीष्ट मासीयास्ताम् मासीरन्। लुङ्-अमास्त अमासाताम् अमासत अमास्थाः अमासाथाम् अमाध्वम् अमासि अमास्वहि अमास्महि। अमास्यत

## ७ ओहाङ् = हा-ज्ञान, गमन प्रापण।

लट्—जिहीते जिहाते जिहते जिहीषे जिहाथे जिहीध्वे जिहे जिहीवहे जिहीमहे। लिट्-जहे जहाते जहिरे जहिषे जहाथे

जहीध्वे जहे जहिवहे जहिमहे । हाता । हास्यते । लोट्—जिहीताम् जिहाताम् जिहताम् जिहीष्व जिहाथाम् जिहीध्वम् जिहै जिहावहै जिहामहै । लङ् अजिहीत अजिहाताम् अजिहत अजिहीथाः अजिहाथाम् अजिहीध्वम् अजिहि अजिहीवहि अजिहीमहि । वि० लिङ् जिहीत जिहीयाताम् जिहीरन् । हासीष्ट हासीयास्ताम् हासीरन् । अहास्त अहासाताम् अहासत । अहास्यत ।

---

अघम् = पाप । अनघम् = पुण्य । अङ्कनम् = मोहर व चिह्न । कौक्कुटिकः = दम्भी । क्रयिकः = व्यापारी । सुधा = गट्टो, चूना, अमृत । गन्धमुखा = छुछूँदर । पश्यतोहरः = सुनार । पिठरः = थाली । वाचाटः = बकवादी । वागुरिकः = शिकारी । प्रवीणः = चतुर । मदकटः = खाँड, चीनी । मधुकरः = भौंरा । मेदुरम् = चिकना । वल्कलम् = छिलका छाल । प्रत्यूहः = विघ्न । जवनिका = कनात, पर्दा । सहायता = मदद । सामग्री = सरंजाम । कुञ्चिका = कुञ्जी । मञ्चिका = कुर्सी व मचान । उपक्रमः = आरम्भ । व्यतिक्रमः = उल्टा । चामीकरम् = सोना ।

## भाषा बनाओ ।

जुहोति हव्येन हिरण्यरेतसम् । अघाद् बिभेमि सर्वदा । पिपर्मि पात्रं भवतां जलेन । जहाहि निद्रां पठनं विधेयम् । मीमीते पश्यतोहरः । जिहीते बालको विद्याम् । मदकटं क्रयको वहते प्रभो ! । मधुकरा न हिलन्ति रसं कवे ! । जिह्रेमि नीचसंगत्या । कपाटौ लोटतां वटो ! । उपवने पवनं न निषेवते । सहायतां वाञ्छति वञ्चकोऽयम् ।

## संस्कृत बनाओ ।

वह सामग्री से अग्नि में हवन करता है । मैं पाप से सदा डरता हूँ । मैं आपके बर्तन को पानी से भरता हूँ । तू नींद को ा और पढ़ । सुनार सोने को तोलता है । बालक विद्या को

प्राप्त करता है। हे स्वामिन् ! व्यापारी शक्कर को लिये जाता है। क्या कवि जी ! भौंरे रस को नहीं चाटते ?। नीच की सङ्गति से लज्जित होता हूँ। अयि लड़के ! किवाड़ लगाले। क्या आप बाग़ में हवा नहीं खाते ?। यह ठगिया सहायता को चाहता है।

## अथोभयपदिनः।

### ८ डु भृञ्-भृ = धारण, पोषण।

लट्—बिभर्त्ति बिभृतः बिभ्रति बिभर्षि बिभृथः बिभृथ। बिभर्मि बिभृवः बिभृमः। बिभृते बिभ्राते बिभ्रते बिभृषे बिभ्राथे बिभृध्वे बिभ्रे बिभृवहे बिभृमहे। लिट्—बिभराञ्चकार। बिभराम्बभूव। बिभरामास। बभार बभ्रतुः बभ्रुः। बभर्थ बभ्रथुः बभ्र। बभार, बभर बभृव बभृम। बिभराञ्चक्रे। बिभराम्बभूव। बिभरामास। बभ्रे बभ्राते बभ्रिरे बभृषे बभ्राथे बभृढ्वे बभ्रे बभृवहे बभृमहे। लुट्—भर्त्ता भर्त्तासि, भर्त्तासे। भरिष्यति, भरिष्यते। लोट्–बिभर्तु, बिभृतात् बिभृताम् बिभ्रतु। बिभृहि, बिभृतात् बिभृतम् बिभृत बिभराणि बिभराव बिभराम। बिभृताम् बिभ्राताम् बिभ्रताम् बिभृस्व बिभ्राथाम् बिभृध्वम् बिभरै बिभरावहै बिभरामहै। लङ्–अबिभः अबिभृताम् अबिभरुः। अबिभः अबिभृतम् अबिभृत अबिभरम् अबिभृव अबिभृम। अबिभृत अबिभ्राताम् अबिभ्रत अबिभृथाः अबिभ्राथाम् अबिभृध्वम् अबिभ्रि अबिभृवहि अबिभृमहि। वि० लिङ्—बिभृयात् बिभृयाताम् बिभृयुः। बिभ्रीत बिभ्रीयाताम् बिभ्रीरन्। आ० लिङ्—भ्रियात् भ्रियास्ताम् भ्रियासुः। भृषीष्ट भृषीयास्ताम् भृषीरन् भृषीष्ठाः भृषीयास्थाम् भृषीढ्वम् भृषीय भृषीवहि भृषीमहि। लुङ्—अभार्षीत् अभार्ष्टाम् अभार्षुः। अभृत अभृषाताम् अभृषत अभृथाः अभृषाथाम् अभृढ्वम् अभृषि अभृष्वहि अभृष्महि। अभरिष्यत्। अभरिष्यत।

याष्टीकः = लाठीवाला । शाक्तीकः = भालेवाला । धानुष्कः = धनुर्धारी । मण्डलाधिपः = कलेक्टर । मण्डलसन्धाता = कमिश्नर । प्रेक्षामन्दिरम् = थियेटर । बाहुयुद्धम् = कुश्ती । प्राभृतम् = भेंट, रिश्वत । स्निग्धता = चिकनाई । रूक्षता = रूखापन । मित्रता = दोस्ती । शत्रुता = दुश्मनी । धारागृहम् = फ़व्वारा ।

## भाषा बनाओ ।

तस्मै वरद्वयमुररीकृतपूर्वमेव याचे बिभर्तु भरतस्तवराजलक्ष्मीम् । वर्षाणि तिष्ठतु चतुर्दशदण्डकायाम् , सौमित्रिमैथिलसुतासहितश्च रामः । दाता न दापयति दापयिता न दत्ते । मेधां मे वरुणो ददातु । विद्यार्थिनो विदधते यतिनां प्रणामान् । न सर्वाणि वस्त्राणि नेनेक्ति भृत्यः । अश्वारोहा न धावन्ति याष्टीका घ्नन्ति दारकान् । युध्यन्ते बाहुयुद्धं ते । विज्ञातदोषेषु दधाति दण्डम् । प्रातः कृत्यं न कुर्वन्ति कीदृशो ब्रह्मचारिणः ।

## संस्कृत बनाओ ।

कैकेयी बोली—जो मेरे लिये दो वरदान पूर्व ही स्वीकृत किये हैं उनको मैं माँगती हूं—भरत तुम्हारी राजगद्दी को भोगे और लक्ष्मण तथा सीता सहित रामचन्द्र चौदह वर्ष तक वन में रहें । दाता दिलवाता नहीं और दिलवाने वाला देता नहीं । हे परमात्मन् ! मेरे लिये पवित्र बुद्धि दीजिये । संन्यासियों को विद्यार्थी प्रणाम करते हैं । सब कपड़ों को नौकर साफ़ नहीं करता । सवार नहीं दौड़ते । लठैत लड़कों को मारते हैं । वे कुश्ती लड़ते हैं । दोषों के जानने पर दण्ड देता है ।

# अथ दिवादिगण-प्रकरणम् ।

## १ दिवु = क्रीडा, जीतने की इच्छा, जुआ खेलना, व्यवहार, चमक, स्तुति, हर्ष, मद, स्वप्न, शोभा, गति ।

लट्-दीव्यति दीव्यतः दीव्यन्ति दीव्यसि दीव्यथः दीव्यथ दीव्यामि दीव्यावः दीव्यामः । लिट्—दिदेव दिदिवतुः दिदिवुः दिदेविथ दिदिवथुः दिदिव दिदेव दिदिविव दिदिविम । देविता । देविष्यति । दीव्यतु, दीव्यतात् दीव्यताम् दीव्यन्तु दीव्य, दीव्यतात् दीव्यतम् दीव्यत दीव्यानि दीव्याव दीव्याम । अदीव्यत् अदीव्यताम् अदीव्यन् । दीव्येत् दीव्येताम् दीव्येयुः । दीव्यात् दीव्यास्ताम् दीव्यासुः । अदेवीत् अदेविष्टाम् अदेविषुः । अदेविष्यत् ।

## २ षिवु = सीना ।

सीव्यति । सिषेव सिषिवतुः सिषिवुः सिषेविथ सिषिवथुः सिषिव सिषेव सिषिविव सिषिविम । सेविता । सेविष्यति । सीव्यतु । असीव्यत् । सीव्येत् । सीव्यात् । असेवीत् असेविष्टाम् असेविषुः । असेविष्यत् ।

## ३ नृती = नाचना, उछलना ।

नृत्यति । ननर्त ननृततुः ननृतुः ननर्तिथ ननृतथुः ननृत ननर्त ननृतिव ननृतिम । नर्तिता । नर्तिष्यति, नर्त्स्यति । नृत्यतु । अनृत्यत् । नृत्येत् । नृत्यात् । अनर्तीत् अनर्तिष्टाम् अनर्तिषुः । अनर्तिष्यत् , अनर्त्स्यत् ।

## ४ त्रसी = घबराहट, डरना ।

त्रस्यति त्रस्यतः त्रस्यन्ति, त्रसति त्रसतः त्रसन्ति। तत्रास

तत्रसतुः तत्रसुः तत्रसिथ तत्रसथुः तत्रस, तत्रास, तत्रस तत्रसिव तत्रसिम, पक्षे—तत्रास त्रेसतुः त्रेसुः। त्रसिता : त्रसिष्यति। त्रस्यतु। त्रसतु। अत्रस्यत्, अत्रसत्। त्रस्येत् त्रसेत्। त्रस्यात् त्रस्यास्ताम् त्रस्यासुः। अत्रासीत् अत्रासिष्टाम् अत्रासिषुः। अत्रसीत् अत्रसिष्टाम् अत्रसिषुः। अत्रसिष्यत।

## ५ शो = छीलना, बारीक करना।

श्यति श्यतः श्यन्ति। शशौ शशतुः शशुः शशिथ, शशाथ शशथुः शश शशौ शशिव शशिम। शाता। शास्यति। श्यतु। अश्यत्। श्येत्। शायात्। अशात्, अशासीत्। अशास्यत्।

## ६ छो = छेदना, बींधना।

छ्यति। चच्छौ चच्छतुः चच्छुः। छाता। छास्यति। छ्यतु अच्छ्यत्। छ्येत्। छायात्। अच्छात्, अच्छासीत्। अच्छास्यत्।

## ७ षो = नाशकरना, समाप्ति।

स्यति। ससौ ससतुः ससुः। साता। सास्यति। स्यतु। अस्यत्। स्येत्। सायात्। असात्। असासीत्। असास्यत्।

## ८ दो = तोड़ना।

द्यति। ददौ ददतुः ददुः। दाता दास्यति। द्यतु। अद्यत्। द्येत्। देयात्। अदात्। अदास्यत्।

## ९ व्यध = ताड़ना, दुःख देना।

विध्यति विध्यतः विध्यन्ति। विव्याध विविधतुः विविधुः विव्यधिथ, विव्यद्ध विविधथुः विविध विव्याध, विव्यध विविधिव विविधिम। व्यद्धा। व्यत्स्यति। विध्यतु। अविध्यत्। विध्येत् विध्यात्। अव्यात्सीत् अव्याद्धाम् अव्यात्सुः अव्यात्सीः अव्याद्धम् अव्याद्ध अव्यात्सम् अव्यात्स्व अव्यात्स्म। अव्यत्स्यत्।

## १० पुष = पुष्टि, पालन, मजबूती।

पुष्यति। पुपोष पुपुषतुः पुपुषुः। पुपोषिथ पुपुषथुः पुपुष। पुपोष पुपुषिव पुपुषिम। पोष्टा। पोक्ष्यति। पुष्यतु। अपुष्यत्। पुष्येत्। पुष्यात्, अपुषत्। अपोक्ष्यत्।

## शुष = सूखना।

शुष्यति। शुशोष शुशुषतुः शुशुषुः शुशोषिथ शुशुषथुः शुशुष। शुशोष शुशुषिव शुशुषिम। शोष्टा। शोक्ष्यति। शुष्यतु। अशुष्यत्। शुष्येत्। शुष्यात्। अशुषत्। अशोक्ष्यत्।

## १२ णश = नाश, लोप, छिपना।

नश्यति। ननाश नेशतुः नेशुः नेशिथ, ननंष्ठ नेशथुः नेश ननाश ननश नेशिव, नेश्व नेशिम, नेश्म। नशिता, नंष्टा। नशिष्यति, नङ्क्ष्यति। नश्यतु। अनश्यत्। नश्येत्। नश्यात्। अनशत्। अनशिष्यत्, अनङ्क्ष्यत्।

## अथात्मनेपादिनः।

## १३ सूङ् = जन्म उत्पत्ति, पैदायश।

लट्–सूयते सूयेते सूयन्ते सूयसे सूयेथे सूयध्वे सूये सूयावहे सूयामहे। लिट्–सुषुवे सुषुवाते सुषुविरे सुषुविषे सुषुवाथे सुषुविध्वे सुषुवे सुषुविवहे सुषुविमहे। सविता, सोता। सविष्यते, सोष्यते। सूयताम् सूयेताम् सूयन्ताम्। असूयत असूयेताम् असूयन्त। सूयेत सूयेयाताम् सूयेरन्। सविषीष्ट,सोषीष्ट। असविष्ट असविषाताम् असविषत, असोष्ट असोषाताम् असोषत। असविषत, असोष्यत।

## १४ दूङ् = परिताप, क्लेश, दुःख होना।

दूयते। दुदुवे दुदुवाते दुदुविरे दुदुविषे दुदुवाथे दुदुविध्वे

दुदुवे दुदुविवहे दुदुविमहे। दविता। दविष्यते। दूयताम्। अदूयत। दूयेत। दविषीष्ट। अदविष्ट। अदविष्यत।

## १५ दीङ् = क्षय, नाश, अदर्शन।

दीयते। दिदीये दिदीयाते दिदीयिरे। दाता। दास्यते। दीयताम्। अदीयत। दीयेत। दासीष्ट। अदास्त अदासाताम् अदासत। अदास्यत।

नलिका = नाली। परिखा = खाई। गालिका = गाली। चन्द्रिका = चाँदनी। चुल्हिका = चूल्हा। कन्यका = लड़की। पर्यवेक्षकः = इंस्पेक्टर। निःश्रेणी = सीढ़ी, नसैनी। तैमिरिकः = रतौंधिया। प्रमाथः = मार्ग। निरवग्रहः = मुक्ति, रिहाई। गतियन्त्रम् = एञ्जिन। आलापयन्त्री = टेलीफ़ोन। मोहगन्धः = क्लोरोफार्म। वेल्लनम् = बिलना। आसन्दी = आराम कुर्सी।

## भाषा बनाओ।

कन्या दीव्यन्ति सीव्यन्ति कन्दुकेन नहि शाटकम्। मयूरा अत्र नृत्यन्ति। त्रस्यन्ति सिंहान्नहि कन्यकाः इमाः। खट्वाः श्यन्ति न तक्षकाः। लक्ष्यं छ्यन्ति न सैनिकाः। श्यन्ति प्रमाथे मम दाडिमानि। उपवने नलिका द्यति को नरः। विध्यन्ति चित्तं वचनानि तस्य। पयसा पुष्यति वृक्षो नीहारेण च शुष्यति। नश्यन्ति पापानि पुरा कृतानि। एकः प्रसूयते जन्तुरेक एव प्रलीयते। अहो नितान्तं हृदयं विदूयते। उपध्यया शिशवो धनमर्जितं झटिति नश्यति नश्यति पश्यत। चन्द्रिकायां पठन्ति ते।

## संस्कृत बनाओ।

लड़कियाँ धोती नहीं सीतीं गेंद से खेलती हैं। यहाँ मोर नाचते हैं। ये लड़कियाँ सिंह से नहीं डरतीं। बढ़ई खाटों को नहीं छीलते हैं। फ़ौजी निशाना नहीं बींधते। मेरे अनारों को

रास्ते में नष्ट करते हैं। बाग़ में नाली को कौन आदमी तोड़ता है। उसके वचन मेरे चित्त को दुःख देते हैं। जल से वृक्ष पुष्ट होता है और पाले से सूख जाता है। 'धर्म से' पूर्व किये हुए पाप नष्ट होजाते हैं। जीव अकेला पैदा होता है और अकेला ही मरता है। अहह! अतिशय मन पीड़ित होता है। अयि बालको! देखो कपट से इकट्ठा किया हुआ धन शीघ्र ही नष्ट होजाता है।

## १६ डीङ् = आकाशगति, उड़ना।

डीयते, उड्डीयते। डिड्ये डिड्याते डिड्यिरे। डयिता। डयिष्यते। डीयताम्। अडीयत। डीयेत। डयिषीष्ट। अडयिष्ट। अडयिष्यत। प्रायः यह धातु उत् पूर्वक ही प्रयुक्त होता है।

## १७ पीङ् = पीना, पान।

पीयते। पिप्ये पिप्याते पिप्यिरे। पेता। पेष्यते। पीयताम्। अपीयत। पीयेत। पेषीष्ट। अपेष्ट अपेषाताम् अपेषत। अपेष्यत।

## १८ माङ् = मान, नापना।

मायते। ममे ममाते ममिरे। माता। मास्यते। मायताम्। अमायत। मायेत। मासीष्ट। अमास्त अमासाताम् अमासत। अमास्यत।

## १६ जनी = जनन, प्रकट होना, पैदायश।

जायते। जज्ञे जज्ञाते जज्ञिरे। जनिता। जनिष्यते। जायताम्। अजायत। जायेत। जनिषीष्ट। अजनि, अजनिष्ट। अजनिषाताम् अजनिषत। अजनिष्यत।

## २० दीपि = दीप्ति, चमक, प्रकाश।

दीप्यते। दिदीपे दिदीपाते दिदीपिरे। दीपिता। दीपिष्यते। दीप्यताम्। अदीप्यत। दीप्येत। दीपिषीष्ट। अदीपि, अदीपिष्ट

अदीपिषाताम् अदीपिषत । अदीपिष्यत ।

## २१ पद = ज्ञान गमन, प्रापण ।

पद्यते । पेदे पेदाते पेदिरे । पत्ता । पत्स्यते । पद्यताम् । अपद्यत । पद्येत । पत्सीष्ट पत्सीयास्ताम् पत्सीरन् । अपादि अपत्साताम् अपत्सत । अपत्स्यत ।

## २२ विद = सत्ता, उपस्थिति, होना ।

विद्यते । विविदे विविदाते विविदिरे । वेत्ता । वेत्स्यते । विद्यताम् । अविद्यत । विद्येत । वित्सीष्ट । अवित्त अवित्साताम् अवित्सत । अवेत्स्यत ।

## २३ बुध = जानना, समझना ।

बुध्यते । बुबुधे बुबुधाते बुबुधिरे । बोद्धा । भोत्स्यते । बुध्यताम् । अबुध्यत । बुध्येत । भुत्सीष्ट भुत्सीयास्ताम् भुत्सीरन् । अबोधि, अबुद्ध अभुत्साताम् अभुत्सत । अबुद्धाः अभुत्साथाम् अभुद्ध्वम् । अभुत्सि अभुत्स्वहि अभुत्स्महि अभोत्स्यत ।

## २४ युध = प्रहार, लड़ना ।

युध्यते । युयुधे । युयुधाते युयुधिरे । योद्धा । योत्स्यते । युध्यताम् । अयुध्यत । युध्येत । युत्सीष्ट । अयुद्ध अयुत्साताम् अयुत्सत । अयोत्स्यत ।

## २५ सृज = त्याग, छोड़ना, बनाना ।

सृज्यते । ससृजे ससृजाते ससृजिरे । स्रष्टा । स्रक्ष्यते । सृज्यताम् । असृज्यत । सृज्येत । सृक्षीष्ट । असृष्ट असृक्षाताम् असृक्षत । अस्रक्ष्यत ।

## अथोभयपदिनः ।

## २६ मृष = तितिक्षा, सहन करना ।

मृष्यति, मृष्यते । ममर्ष ममृषतुः ममृषुः । ममृषे ममृषाते

ममृषिरे । मर्षिता । मर्षितासि, मर्षितासे । मर्षिष्यति, मर्षिष्यते मृष्यतु । मृष्यताम् । अमृष्यत् , अमृष्यत । मृष्येत् , मृष्येत । मृष्यात् । मर्षिषीष्ट । अमर्षीत् , अमर्षिष्ट । अमर्षिष्यत् , अमर्षिष्यत ।

## २७ णह = बन्धन, बाँधना ।

नह्यति, नह्यते । ननाह नेहतुः नेहुः । नेहे नेनाते नेहिरे । नद्धा नद्धारौ नद्धारः । नद्धासि, नद्धासे । नत्स्यति, नत्स्यते । नह्यतु, नह्यताम् । अनह्यत् अनह्यत । नह्येत् , नह्येत । नह्यात् , नत्सीष्ट नत्सीयास्ताम् नत्सीरन् । अनात्सीत् अनाद्धाम् अनात्सुः अनात्सीः अनाद्धम् अनाद्ध अनात्सम् अनात्स्व अनात्स्म । अनद्ध अनत्साताम् अनत्सत । अनत्स्यत् , अनत्स्यत ।

---

कल्पितोदन्तः = दन्तकथा । स्पर्धा = दूसरे को दबाने की इच्छा । अस्तोकम् = बहुत । स्तोकम् = कम । भागिनेयः = भानजा । पान्थः, पथिकः = रास्तेगीर । लवः = लव । कथा = वार्त्ता । ध्वान्तम् = अन्धकार । भीषणम् = भयङ्कर । उपसंहारः = समाप्ति । उत्सङ्गः = गोद । श्वपचः = मेहतर । शीर्षम् = शिर । शिक्यम् = छींका । प्रतीरम् = किनारा । कल्मषम् = पाप । सकलम् = सब । कातरः = भीरु, डरपोक । अच्छम् = स्वच्छ, साफ । भूरि भूरि = बार २ । सौकर्यम् = सरलता । कश्मलम् = मोह ।

## भाषा बनाओ ।

उड्डीयन्ते खगास्तत्र पीयन्ते विमलं जलम् । माता मार्ष्टे वसनम् । न जायते म्रियते वा कदाचित् । दीप्यन्ते दीपकास्तत्र । ध्वान्तलेशो न विद्यते । ग्रामं पद्यते पद्गः, पाथेयं नहि नीयते । बुध्यन्ते पण्डिताः शास्त्रं युध्यन्ते क्षत्रिया रणे । सृष्टिं सरीसृज्यते विष्णुः । अनुचितमणुमात्रं विद्विषां मृष्यते न । न नह्यते

तस्य फलानि वस्त्रे । यमुनाप्रतीरे निवसन्ति साधवः । श्रुता कथा मया त्वया मृषा निगद्यते ।

## संस्कृत बनाओ ।

पक्षी वहाँ उड़ते हैं और साफ़ पानी पीते हैं। नापने वाला कपड़ा नापता है । जीव न कभी मरता है और न पैदा होता है। वहाँ दीपक जलते हैं अन्धकार का लेश नहीं । यह पैदल गाँव को जाता है सफ़र ख़र्च नहीं लिये जाता। पण्डित शास्त्र को जानते हैं और क्षत्रिय संग्राम में लड़ते हैं। परमात्मा सब जगत् को बार बार बनाता है। वैरियों का नाम मात्र भी अनुचित व्यवहार नहीं सहता । वह उसके फलों को कपड़े में बाँधता है। यमुना के तट पर साधु रहते हैं। मैंने कथा कब सुनी है तुम झूठ कहते हो ।

## अथ स्वादिगणप्रकरणम् ।

## उभयपदिनोधातवः ।

### १ षुञ् = रस निकालना ।

सुनोति सुनुतः सुन्वन्ति सुनोषि सुनुथः सुनुथ सुनोमि सुनुवः सुन्वः सुनुमः सुन्मः । सुनुते सुन्वाते सुन्वते सुनुषे सुन्वाथे सुनुध्वे सुन्वे सुनुवहे सुन्वहे, सुनुमहे सुन्महे । लिट्-सुषाव सुषुवतुःसुषुवुः सुषविथ. सुषोथ सुषुवथुः सुषुव सुषाव, सुषव सुषुविव सुषुविम । सुषुवे सुषुवाते सुषुविरे सुषुविषे सुषुवाथे सुषुविध्वे सुषुवे सुषुविवहे सुषुविमहे । लुट्—सोता सोतारौ सोतारः सोतासि, सोतासे । सोष्यति, सोष्यते । सुनोतु, सुनुतात् सुनुताम् सुन्वन्तु सुनु, सुनुतात् सुनुतम् सुनुत सुनवानि सुनुवाव सुनुवाम । सुनुताम् सुन्वाताम् सुन्वताम् सुनुष्व सुन्वाथाम् सुनुध्वम् सुनवै सुनवावहै सुनवामहै । लङ्—

असुनोत् असुनुताम् असुन्वन् असुनोः असुनुतम् असुनुत असुनवम् असुनुव, असुन्व असुनुम असुन्म। असुनुत असुन्वाताम् असुन्वत असुनुथाः असुन्वाथाम् असुनुध्वम् असुन्वि असुनुवहि, असुन्वहि असुनुमहि, असुन्महि। विधिलिङ्—सुनुयात् सुनुयाताम् सुनुयुः सुनुयाः सुनुयातम् सुनुयात सुनुयाम् सुनुयाव सुनुयाम। सुन्वीत सुन्वीयाताम् सुन्वीरन्, सुन्वीथाः सुन्वीयाथाम् सुन्वीध्वम् सुन्वीय सुन्वीवहि सुन्वीमहि। आ० लिङ्—सूयात् सूयास्ताम् सूयासुः सूयाः सूयास्तम् सूयास्त सूयासम् सूयास्व सूयास्म। सोषीष्ट सोषीयास्ताम् सोषीरन् सोषीष्ठाः सोषीयास्थाम् सोषीढ्वम् सोषीय सोषीवहि सोषीमहि। लुङ्-असावीत् असाविष्टाम् असाविषुः। असोष्ट असोषाताम् असोषत। असोष्यत्, असोष्यत।

## २ चिञ् = चयन, चुनना।

चिनोति चिनुतः चिन्वन्ति। चिनुते चिन्वाते चिन्वते। चिचाय चिच्यतुः चिच्युः चिचयिथ, चिचेथ चिच्यथुः चिच्य चिचाय, चिचय चिच्यिव चिच्यिम। एवं चिकाय चिक्यतुः चिक्युः—इत्यादि। चिच्ये चिच्याते चिच्यिरे चिच्यिषे चिच्याथे चिच्यिध्वे चिच्ये चिच्यिवहे चिच्यिमहे। एवं चिक्ये चिक्याते चिक्यिरे इत्यादि। चेता चेतारौ चेतारः चेतासि। चेतासे। चेष्यति। चेष्यते। चिनोतु चिनुतात् चिनुताम् चिन्वन्तु। चिनुताम् चिन्वाताम् चिन्वताम्। अचिनोत् अचिनुताम् अचिन्वन्। अचिनुत अचिन्वाताम् अचिन्वत। चिनुयात् चिनुयाताम् चिनुयुः। चिन्वीत चिन्वीयाताम् चिन्वीरन्। चीयात् चीयास्ताम् चीयासुः। चेषीष्ट चेषीयास्ताम् चेषीरन्। अचैषीत् अचैष्टाम् अचैषुः। अचेष्ट अचेषाताम् अचेषत। अचेष्यत्, अचेष्यत।

## ३ स्तृञ् = आच्छादन, ढाँकना ।

स्तृणोति स्तृणुतः स्तृण्वन्ति । स्तृणुते स्तृण्वाते स्तृण्वते । तस्तार तस्तरतुः तस्तरुः तस्तर्थ तस्तरथुः तस्तर तस्तार तस्तर तस्तरिव तस्तरिम । तस्तरे तस्तराते तस्तरिरे तस्तरिषे तस्तराथे तस्तरिध्वे तस्तरे तस्तरिवहे तस्तरिमहे । स्तर्ता स्तर्तारौ स्तर्तारः स्तर्तासि, स्तर्तासे । स्तरिष्यति । स्तरिष्यते । स्तृणोतु स्तृणुतात् स्तृणुताम् स्तृण्वन्तु । स्तृणुताम् स्तृण्वाताम् स्तृण्वताम् । अस्तृणोत् अस्तृणुताम् अस्तृण्वन् । अस्तृणुत अस्तृण्वाताम् अस्तृण्वत । स्तृणुयात् स्तृणुयाताम् स्तृणुयुः । स्तृण्वीत स्तृण्वीयाताम् स्तृण्वीरन् । स्तर्यात् स्तर्यास्ताम् स्तर्यासुः । स्तरिषीष्ट स्तरिषीयास्ताम् स्तरिषीरन् । स्तृषीष्ट स्तृषीयास्ताम् स्तृषीरन् । अस्तार्षीत् अस्ताष्टाम् अस्तार्षुः । अस्तरिष्ट अस्तरिषाताम् अस्तरिषत । अस्तृत अस्तृषाताम् अस्तृषत । अस्तरिष्यत् । अस्तरिष्यत ।

## ४ धूञ् = काँपना, कँपाना ।

धूनोति धूनुतः धून्वन्ति । धूनुते धून्वाते धून्वते । दुधाव दुधुवतुः दुधुवुः दुधविथ, दुधोथ । दुधुवे दुधुवाते दुधुविरे धोता, धविता, धोतासि धोतासे । धोष्यति, धविष्यति धोष्यते धविष्यते । धूनोतु धूनुतात् धूनुताम् धून्वन्तु । धूनुताम् धून्वाताम् धून्वताम् । अधूनोत् अधूनुताम् अधून्वन् । अधूनुत अधून्वाताम् अधून्वत । धूनुयात् धूनुयाताम् धूनुयुः । धून्वीत धून्वीयाताम् धून्वीरन् । धूयात् धूयास्ताम् धूयासुः । धोषीष्ट धोषीयास्ताम् धोषीरन् , धविषीष्ट धविषीयास्ताम् धविषीरन्। अधौषीत् अधौष्टाम् अधौषुः,अधावीत् अधाविष्टाम् अधाविषुः। अधोष्ट अधोषाताम् अधोषत, अधविष्ट अधविषाताम् अधविषत । अधोष्यत् , अधविष्यत् , अधोष्यत, अधविष्यत ।

उत्पतनम् = उड़ना, ऊपर को जाना। निपतनम् = गिरना। मोचनम् = छोड़ना। पेषणम् = पीसना। प्रतिक्षणम् = हरवक्त। उत्पादनम् = पैदा करना। तर्पणम् = तृप्त करना, तृप्ति। खननम् खोदना। धरणम् = धरना। जननम् = पैदाइश। मरणम् = मौत। दर्शनम् = देखना। स्पर्शनम् = छूना। मननम् = मानना।

## भाषा बनाओ।

सुनोमि सोमं न चिनोमि पुष्पम्। स्तृणोतु पात्राणि समानीमानि। धूनोति चम्पकवनानि समीरणोऽयम्। निपतनं शिखरात् सरलं सखे! नहि तथोत्पतनं भवतीतिदिक्। प्रतिक्षणं धर्मपथं व्रजामि। मोदते जननं श्रुत्वा मरणं च विषीदति।

## संस्कृत बनाओ।

सोम के रस को निकालता हूँ फूलों को इकट्ठा नहीं करता। आप इन बर्तनों को ढाँक दें। यह वायु चमेली के वनों को कपाता है। हे मित्र! पर्वत से गिरना सहज है परन्तु उस पर चढ़ना कठिन है। सदा धर्म के मार्ग पर चलता हूं। वह जन्म को सुनके प्रसन्न होता है और मृत्युको सुनके दुःखित होता है।

## अथ तुदादिगणप्रकरणम्।

### १ तुद = पीडा, दुःख, चुभना।

लट्—तुदति तुदतः तुदन्ति तुदसि तुदथः तुदथ तुदामि तुदावः तुदामः। तुदते तुदेते तुदन्ते तुदसे तुदेथे तुदध्वे तुदे तुदावहे तुदामहे। लिट्—तुतोद तुतुदतुः तुतुदुः तुतोदिथ, तुतुदथुः तुतुद तुतोद तुतुदिव तुतुदिम। तुतुदे तुतुदाते तुतुदिरे तुतुदिषे तुतुदाथे तुतुदिध्वे तुतुदे तुतुदिवहे तुतुदिमहे। तोत्ता। तोत्स्यति। । तोत्स्यते। तुदतु तुदतात् तुदताम् ...द तुद तुदतात् तुदतम् ... तुदाव तुदाम।

तुदेताम् तुदन्ताम् तुदस्व तुदेथाम् तुदध्वम् तुदै तुदावहै तुदामहै। लङ्–अतुदत् अतुदताम् अतुदन् अतुदः अतुदतम् अतुदत अतुदम् अतुदाव अतुदाम अतुदत अतुदेताम् अतुदन्त अतुदथाः अतुदेथाम् अतुदध्वम् अतुदे अतुदावहि अतुदामहि। वि० लिङ्—तुदेत् तुदेताम् तुदेयुः तुदेः तुदेतम् तुदेत तुदेयम् तुदेव तुदेम। तुदेत तुदेयाताम् तुदेरन् तुदेथाः तुदेयाथाम् तुदेध्वम् तुदेय तुदेवहि तुदेमहि। आ० लिङ्–तुद्यात् तुद्यास्ताम् तुद्यासुः तुद्याः तुद्यास्तम् तुद्यास्त, तुद्यासम् तुद्यास्व तुद्यास्म। तुत्सीष्ट तुत्सीयास्ताम् तुत्सीरन् तुत्सीष्ठाः तुत्सीयास्थाम् तुत्सीध्वम् तुत्सीय तुत्सीवहि तुत्सीमहि। लुङ् अतौत्सीत् अतौत्ताम् अतौत्सुः अतौत्सीः अतौत्तम् अतौत्त अतौत्सम् अतौत्स्व अतौत्स्म। अतुत्त अतुत्साताम् अतुत्सत अतुत्थाः अतुत्साथाम् अतुद्ध्वम् अतुत्सि अतुत्स्वहि अतुत्स्महि। लृङ्—अतोत्स्यत्, अतोत्स्यत।

## २ णुद् = प्रेरणा करना, उकसाना।

नुदति नुदतः नुदन्ति। नुदते नुदेते नुदन्ते। नुनोद नुनुदतुः नुनुदुः। नुनुदे नुनुदाते नुनुदिरे। नोत्ता। नोत्स्यति, नोत्स्यते। नुदतु, नुदताम्। अनुदत्, अनुदत। नुदेत्, नुदेत। नुद्यात्, नुत्सीष्ट। अनौत्सीत्, अनुत्त। अनोत्स्यत्, अनोत्स्यत।

## ३ भ्रस्ज = पकाना, भूँजना।

भृज्जति भृज्जतः भृज्जन्ति। भृज्जते भृज्जेते भृज्जन्ते। बभर्ज बभर्जतुः बभर्जुः बभर्जिथ, बभर्ष्ठ बभर्जथुः बभर्ज बभर्ज बभर्जिव बभर्जिम। पक्षे बभ्रज्ज बभ्रज्जतुः बभ्रज्जुः। बभ्रज्जिथ बभ्रष्ठ बभ्रज्जथुः बभ्रज्ज बभ्रज्ज बभ्रज्जिव बभ्रज्जिम। बभर्जे बभर्जाते बभर्जिरे बभर्जिषे बभर्जाथे बभर्जिध्वे बभर्जे बभर्जिवहे बभर्जिमहे। पक्षे बभ्रज्जे बभ्रज्जाते बभ्रज्जिरे बभ्रज्जिषे बभ्र-

ज्जाथे बभृज्जिध्वे बभ्रज्जे बभ्रज्जिवहे, बभ्रज्जिमहे। भर्ष्टा भर्ष्टारौ भर्ष्टारः। भ्रष्टा भ्रष्टारौ भ्रष्टारः। भर्क्ष्यति, भ्रक्ष्यति। भर्क्ष्यते, भ्रक्ष्यते। भृज्जतु। भृज्जताम्। अभृज्जत्। अभृज्जत। भृज्ज्येत्। भृज्जेत। भृज्ज्यात्। भर्क्षीष्ट भर्क्षीयास्ताम् भर्क्षीरन्, भ्रक्षीष्ट, भ्रक्षीयास्ताम् भ्रक्षीरन्। अभार्क्षीत् अभार्ष्टाम् अभार्क्षुः। अभ्राक्षीत् अभ्राष्टाम् अभ्राक्षुः। अभर्ष्ट अभर्क्षाताम् अभर्क्षत। अभ्रष्ट अभ्रक्षाताम् अभ्रक्षत। अभर्क्ष्यत्, अभ्रक्ष्यत्। अभर्क्ष्यत, अभ्रक्ष्यत

## ४ कृष = खोदना, खींचना, हल चलाना।

कृषति कृषते। चकर्ष चकृषतुः चकृषुः चकर्षिथ चकृषथुः चकृष चकर्ष चकृषिव चकृषिम। चकृषे चकृषाते चकृषिरे चकृषिषे चकृषाथे चकृषिध्वे चकृषे चकृषिवहे चकृषिमहे। कर्ष्टा कर्ष्टारौ कर्ष्टारः, क्रष्टा क्रष्टारौ क्रष्टारः। कर्क्ष्यति, क्रक्ष्यति। कर्क्ष्यते, क्रक्ष्यते। कृषतु, कृषताम्। अकृषत्, अकृषत। कृषेत्, कृषेत। कृष्यात्, कृक्षीष्ट। अकार्क्षीत् अक्राक्षीत्, अकृक्षत् अकृक्षत, अकृष्ट, अकर्क्ष्यत्, अक्रक्ष्यत्। अकर्क्ष्यत, अक्रक्ष्यत।

## ५ मिल = संगम, मिलना।

मिलति, मिलते। मिमेल मिमिलतुः मिमिलुः। मिमिले मिमिलाते मिमिलिरे। मेलिता मेलितारौ मेलितारः मेलितासि मेलितासे। मेलिष्यति, मेलिष्यते। मिलतु, मिलताम्। अमिलत्, अमिलत। मिलेत्, मिलेत। आ० लिङ्—मिल्यात् मिलिषीष्ट। अमेलीत् अमेलिष्टाम् अमेलिषुः। अमेलिष्ट अमेलिषाताम् अमेलिषत। अमेलिष्यत्। अमेलिष्यत।

## ६ मुच्लृ = मोचन, छोड़ना।

मुञ्चति। मुञ्चते। मुमोच मुमुचतुः मुमुचुः मुमोचिथ। मुमुचे मुमुचाते मुमुचिरे। मोक्ता। मोक्ष्यति। मोक्ष्यते। मुञ्चतु

मुञ्चताम् । अमुञ्चत्, अमुञ्चत । मुञ्चेत् । मुञ्चेत । मुच्यात्, मुक्षीष्ट । अमुचत् अमुचताम् अमुचन् । अमुक्त अमुक्षाताम् अमुक्षत । अमोक्ष्यत्, अमोक्ष्यत ।

## ७ लुप् लृ = छेदन, काटना ।

लुम्पति । लुम्पते । लुलोप लुलुपतुः लुलुपुः, लुलुपे लुलुपाते लुलुपिरे । लोप्ता । लोप्स्यति, लोप्स्यते । लुम्पतु । लुम्पताम् । अलुम्पत् । अलुम्पत । लुम्पेत्, लुम्पेत । लुप्यात् । लुप्सीष्ट । अलुपत् अलुपताम् अलुपन् । अलुप्त अलुप्साताम् अलुप्सत । अलोप्स्यत् । अलोप्स्यत ।

## ८ विद्लृ = लाभ, लेना; पाना ।

विन्दति । विन्दते । विवेद विविदतुः विविदुः विवेदिथ । विविदे विविदाते विविदिरे । वेत्ता । वेत्स्यति । वेत्स्यते । विन्दतु । विन्दताम् । अविन्दत् । अविन्दत । विन्देत् । विन्देत । विद्यात् । वित्सीष्ट । अविदत् अविदताम् अविदन् । अवित्त अवित्साताम् अवित्सत । अवेत्स्यत्, अवेत्स्यत ।

## ९ सिच = क्षरण, बखेरना, सींचना ।

सिञ्चति । सिञ्चते । सिषेच सिषिचतुः सिषिचुः सिषेचिथ । सिषिचे सिषिचाते सिषिचिरे । सेक्ता । सेक्ष्यति । सेक्ष्यते । सिञ्चतु । सिञ्चताम् । असिञ्चत् । असिञ्चत । सिञ्चेत् । सिञ्चेत । सिच्यात् । सिक्षीष्ट । असिचत् । असिक्त असिक्षाताम् असिक्षत । असेक्ष्यत् । असेक्ष्यत ।

## १० लिप = लीपना, पोतना, बढ़ाना ।

लिम्पति । लिम्पते । लिलेप । लिलिपे । लेप्ता । लेप्स्यति । लेप्स्यते । लिम्पतु । लिम्पताम् । अलिम्पत् । अलिम्पत । लिम्पेत् । लिम्पेत । लिप्यात् । लिप्सीष्ट । अलिपत् अलिपत, अलिप्त । अलेप्स्यत् । अलेप्स्यत ।

## भाषा बनाओ ।

शठा न मुञ्चन्ति हठं कदापि। भृज्जन्ति शाकानि कृषीवला इमे । मिलामि मित्रं न जहामि पौरुषम् । तुदन्ति चरणे कुसुमानीमानि । कृषति हलवाहको हलम् । क्षेत्रं लुम्पन्ति लावकाः । सतः पुत्रान् विन्दावहै। सिञ्चस्वाऽऽम्रस्य पादपम् । अङ्गणं नहि लिम्पन्ति लेप्स्यन्ति यज्ञमन्दिरम् । मोचयामि गृहबन्धनम् । आखवो मम वस्त्राणि लुम्पन्ति त्वं न पश्यसि । नाहं पश्यामि ।

## संस्कृत बनाओ ।

मूर्ख अपने हठ को कभी नहीं छोड़ते । ये किसान शाक पकाते हैं । मैं मित्र से मिलता हूँ पुरुषार्थ नहीं छोड़ता हूँ । क्या ये फूल तुम्हारे पैर में चुभते हैं ? हलको चलाने वाला हलको जोतता है । काटनेवाले खेतको काटते हैं । हम दोनों को अच्छे पुत्र मिलें । आम के वृक्ष को सींच। वे आँगन को नहीं लीपते यज्ञ मन्दिर को लीपेंगे । घर के बन्धन को छोडूंगा । तू नहीं देखता चूहे मेरे कपड़े काटते हैं । मैं नहीं देखता हूँ ।

## अथ परस्मैपादिनः ।

### ११ कृति = छेदन, कृन्तन, काटना, कतरना ।

कृन्तति कृन्ततः कृन्तन्ति । चकर्त चकृततुः चकृतुः चकृतिथ चकृतथुः चकृत चकर्त चकृतिव चकृतिम । कर्तिता । कर्तिष्यति कर्त्स्यति । कृन्ततु । अकृन्तत् । कृन्तेत। कृत्यात् कृत्यास्ताम् कृत्यासुः। अकर्तीत् अकर्तिष्टाम् अकर्तिषुः ।अकर्तिष्यत् , अकर्त्स्यत् ।

### १२ खिद = दुःख, खेद, कष्ट ।

खिन्दति । चिखेद चिखिदतुः चिखिदुः चिखेदिथ । खेत्ता। खेत्स्यति । खिन्दत । अखिन्दत् । खिन्देत् । खिद्यात् । अखैत्सीत् अखैत्ताम् अखैत्सुः । अखेत्स्यत् ।

## १३ पिश = अवयव करना, टुकड़े करना पीसना

पिंशति । पिपेश पिपिशतुः पिपिशुः । पेशिता । पेशिष्यति । पिंशतु । अपिंशत् पिंशेत् । पिश्यात् । अपेषीत् अपेशिष्टाम् अपेशिषुः । अपेशिष्यत् ।

## १४ ओव्रश्चु = छेदन, काटना ।

वृश्चति । वव्रश्च वव्रश्चतुः वव्रश्चुः वव्रश्चिथ, वव्रष्ठ । व्रश्चिता व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति । वृश्चतु । अवृश्चत् । वृश्चेत् । वृश्च्यात् वृश्च्यास्ताम् वृश्च्यासुः । अव्रश्चीत् अव्रश्चिष्टाम् अव्रश्चिषुः, अव्राक्षीत् । अव्रश्चिष्यत् , अव्रक्ष्यत् ।

## १५ व्यच = बहाना, ठगना ।

विचति । विव्याच विविचतुः विविचुः विव्यचिथ विविचथुः विविच विव्याच विव्यच विविचिव विविचिम । व्यचिता । व्यचिष्यति । विचतु । अविचत् । विचेत् । विच्यात् । अव्याचीत्, अव्यचीत् । अव्यचिष्यत् ।

## १६ उछि = उञ्छन, कणाचीनना, सिला चुगना ।

उञ्छति । उञ्छाञ्चकार, उञ्छाम्बभूव, उञ्छामास । उञ्छिता उञ्छिष्यति । उञ्छतु । औञ्छत् । उञ्छयेत । उञ्छयात् । औञ्छीत् । औञ्छिष्यत् ।

## १७ ऋच्छ = गति मूर्च्छा, मूर्तिभाव, अचेतन ।

ऋच्छति । आनर्च्छ । ऋच्छिता । ऋच्छिष्यति । ऋच्छतु । आर्च्छत् । ऋच्छेत् । ऋच्छ्यात् । आर्च्छीत् । आर्च्छिष्यत् ।

## १८ उज्झ = त्याग, छोड़ना ।

उज्झति । उज्झाञ्चकार । उज्झाम्बभूव, उज्झामास ।

उज्झिता । उज्झिष्यति । उज्झतु । औज्झत् । उज्झेत् । उज्झयात् । औज्झीत् । औज्झिष्यत् ।

## १९ लुभ = विमोहन, लुभना ।

लुभति । लुलोभ लुलुभतुः लुलुभुः । लोभिता, लोब्धा । लोभिष्यति । लुभतु । अलुभत् । लुभेत् । लुभ्यात् । अलोभीत् । अलोभिष्यत् ।

## २०, २१ तृप, तृम्फ = तृप्ति, तर्पण ।

तृपति । ततर्प ततृपतुः ततृपुः । तर्पिता तर्पिष्यति । तृपतु अतृपत् । तृपेत् । तृप्यात् । अतर्पीत् । अतर्पिष्यत् ।

तृम्फति । ततृम्फ । तृम्फिता । तृम्फिष्यति । तृम्फतु । अतृम्फत् । तृम्फेत् । तृफ्यात् । अतृम्फीत् । अतृम्फिष्यत् ।

## २२, २३ मृड, पृड = सुखन, सुख पाना ।

मृडति । ममर्ड । मर्डिता । मर्डिष्यति । मृडतु । अमृडत् । मृडेत् । मृड्यात् । अमर्डीत् । अमर्डिष्यत् ।

पृडति । पपर्ड । पर्डिता । पर्डिष्यति । पृडतु । अपृडत् । पृडेत् । पृड्यात् । अपर्डीत् । अपर्डिष्यत् ।

## २४ शुन = ज्ञान, गमन, प्राप्ति ।

शुनति । शुशोन । शोनिता । शोनिष्यति । शुनतु । अशुनत् । शुनेत् । शुन्यात् । अशोनीत् । अशोनिष्यत् ।

## इष = इच्छा, चाह ।

इच्छति । इयेष ईषतुः ईषुः । एषिता, एष्टा । एषिष्यति । इच्छतु । ऐच्छत् । इच्छेत् । इष्यात् । ऐषीत् । ऐषिष्यत् ।

— ❀ —

व्याजीकरणम् = ठगना । वशीकरणम् = वश में करना । मिश्रीकरणम् = मिलाना । परित्राणम् = रक्षण, बचाव । आस-

न्नम् = पास। विकसनम् = खिलना। विवरणम् = बहुत बयान, रिपोर्ट। निस्तरणम् = निस्तार। मरालः = राजहंस।

## भाषा बनाओ।

धर्ममूलं न कृन्ततु। किं पिंशसि भो! वृद्धे?। खिन्दामि गोवधं श्रुत्वा निन्दामि मांसभक्षकान्। उञ्छाञ्चकार धान्यं प्रथितः कणादः। आनर्च्छं गजपातेन। उज्झन्ति काष्ठानि जलानीमानि। अलोभिषं तव वचनेन भ्रातः!। अतर्पिषं नो भवतोजलेन। मृडन्ति लोका द्रविणेन विश्वे। पृडन्ति बोधेन विवेकिनः सदा। अहं ग्रामं शुनामि किम्?। नैषिष्यामि परित्राणं तावकं न कदाचन। काशीविद्यापीठस्य विवरणं मयका श्रुतम्।

## संस्कृत बनाओ।

आप धर्म की जड़ न काटें। अयि बुढ़िया क्या पीसती है। गोवध को सुनके दुःखित होता हूँ और मांसाशियों की निन्दा करता हूँ। प्रसिद्ध कणाद मुनि ने सिला चुगा था। वह हाथी से गिरने से बेहोश होगया। लकड़ियाँ जलको छोड़ती हैं। हे भाई तेरे वचन से लोभ में आगया। आपके जल से मैं तृप्त नहीं हुआ। सब पुरुष धन से सुखी होते हैं। ज्ञानी जन ज्ञान से सुखी होते हैं। क्या मैं गाँव को जाऊँ। मैं तेरी रक्षा कभी नहीं चाहूँगा। काशीपीद्यापीठ की रिपोर्ट मैंने सुनी।

## २६ कुट = कुटिलता, खोटाई।

कुटति। चुकोट चुकुटतुः चुकुटुः चुकुटिथ। कुटिता। कुटिष्यति। कुटतु। अकुटत्। कुटेत्। कुट्यात्। अकुटीत्। अकुटिष्यत्।

## २७ पुट = संश्लेषण, चिपटना।

पुटति। पुपोट पुपुटतुः पुपुटुः। पुटिताः पुटिष्यति॥पुटतु। अपुटत्। पुटेत्। पुट्यात्। अपुटीत। अपुटिष्यत्।

## २८ स्फुट = विकसन, खिलना।

स्फुटति। पुस्फोट पुस्फुटतुः पुस्फुटुः। स्फुटिता। स्फुटिष्यति। स्फुटतु। अस्फुटत्। स्फुटेत्। स्फुट्यात्। अस्फुटीत्। अस्फुटिष्यत्।

## २९, ३० स्फुर, स्फुल = सँचलन, फुरना। चलना, फुरती करना।

स्फुरति पुस्फोर। स्फुरिता। स्फुरिष्यति। स्फुरतु। अस्फुरत्। स्फुरेत्। स्फुर्यात्। अस्फुरीत्। अस्फुरिष्यत्। एवं स्फुल धातो रूपाणि।

## ३१ णू = स्तवन, तारीफ।

नुवति नुवतः नुवन्ति। नुनाव नुनुवतुः नुनुवुः। नुनुविथ नुनुवथुः नुनुव नुनाव, नुनव नुनुविव नुनुविम। नुविता। नुविष्यति। नुवतु। अनुवत् नुवेत्। नूयात्। अनुवीत्। अनुविष्यत्।

## ३२ टुमस्जो = शुद्धि, शोधन, स्नान।

मज्जति। ममज्ज ममज्जतुः ममज्जुः ममज्जिथ, ममङ्क्थ ममज्जथुः ममज्ज ममज्ज ममज्जिव ममज्जिम। मङ्क्ता। मङ्क्ष्यति। मज्जतु। अमज्जत्। मज्जेत्। मज्ज्यात् अमाङ्क्षीत् अमाङ्क्ताम् अमाङ्क्षुः अमाङ्क्षीः अमाङ्क्तम् अमाङ्क्त अमाङ्क्षम् अमाङ्क्ष्व अमाङ्क्ष्म। अमङ्क्ष्यत्।

## ३३ रुजो = भङ्ग, टूटना, खराबी।

रुजति। रुरोज रुरुजतुः रुरुजुः। रोक्ता। रोक्ष्यति। रुजतु। अरुजत्। रुजेत्। रुज्यात्। अरौक्षीत् अरौक्ताम् अरौक्षुः। अरोक्ष्यत्।

### ३४ भुजो = कौटिल्य, कुटिलता, खोटापन ।

भुजति । बुभोज । भोक्ता । भोक्ष्यति । भुजतु । अभुजत् । भुजेत् । भुज्यात् । अभौक्षीत् । अभोक्ष्यत् ।

### ३५ विश = प्रवेश, घुसना ।

विशति । विवेश । वेष्टा । वेक्ष्यति । विशतु । अविशत् । विशेत् । विश्यात् । अविक्षत् । अवेक्ष्यत् ।

### ३६ मृश = आमर्शन, विचार ।

मृशति । ममर्श ममृशतुः ममृशुः ममर्शिथ । मर्ष्टा, म्रष्टा । म्रक्ष्यति. मर्क्ष्यति । मृशतु । अमृशत् । मृशेत् । मृश्यात् । अम्राक्षीत्, अमार्क्षीत् । अमृक्षत् । अम्रक्ष्यत्, अमर्क्ष्यत् ।

### ३७ = षद् लृ (सद) = अवयव पृथक् करना, दुःखी होना ।

सीदति । ससाद सेदतुः सेदुः । सत्ता।सत्स्यति । सीदतु । असीदत् । सीदेत् । सद्यात् । असदत् । असत्स्यत् ।

### ३८ शद् लृ (शद) = शातन, विशीर्ण होना, बिखरना ।

शीयते शीयेते शीयन्ते।शशादशेदतुः शेदुः।शत्ता । शत्स्यति । शीयताम् । अशीयत शीयेत । शद्यात् । अशदत् । अशत्स्यत् ।

### ३९ कॄ = विक्षेप, बखेरना ।

किरति । चकार चकरतुः चकरुः करिता, करीता । करिष्यति, करीष्यति । किरतु । अकिरत् । किरेत् । कीर्यात् । अकारीत् । अकरिष्यत्, अकरीष्यत् ।

## ४० गॄ = निगरण, निगलना ।

गिरति, गिलति । जगार, जगाल । गरिता, गरीता, गलिता, गलीता । गरिष्यति, गरीष्यति, गलिष्यति, गलीष्यति । गिरतु, गिलतु । अगिरत्, अगिलत् । गिरेत्, गिलेत् । गीर्यात्, अगारीत्, अगालीत् । अगरिष्यत्, अगरीष्यत्, अगलिष्यत्, अगलीष्यत् ।

## ४१ प्रच्छ = ज्ञीप्सा, जानने की इच्छा, पूछना ।

पृच्छति । पप्रच्छ पप्रच्छतुः पप्रच्छुः पप्रच्छिथ, पप्रष्ठ । प्रष्टा । प्रक्ष्यति । पृच्छतु । अपृच्छत् । पृच्छेत् । पृच्छ्यात् । अप्राक्षीत् । अप्रक्ष्यत् ।

### अथात्मनेपदिनः ।

## ४२ मृङ् = प्राण त्यागना, मरना ।

म्रियते म्रियेते म्रियन्ते । ममार मम्रतुः मम्रुः ममर्थ । मर्ता । मरिष्यति । म्रियताम् म्रियेताम् म्रियन्ताम् । अम्रियत अम्रियेताम् अम्रियन्त । म्रियेत म्रियेयाताम् म्रियेरन् । मृषीष्ट मृषीयास्ताम् मृषीरन् । अमृत अमृषाताम् अमृषत । अमरिष्यत् ।

## ४३ पृङ् = व्यायाम, व्यापार, कार्य करना ।

इसका प्रयोग प्रायः वी आङ् पूर्वक होता है । व्याप्रियते व्यापप्रे । व्यापर्ता । व्यापरिष्यते । व्याप्रियताम्, व्याप्रियत । व्याप्रियेत । व्यापृषीष्ट । व्यापृत । व्यापरिष्यत ।

## ४४ जुषी = प्रीति, सेवा करना ।

जुषते । जुजुषे । जोषिता । जोषिष्यते । जुषताम् । अजुषत जुषेत । जोषिषीष्ट । अजोषिष्ट । अजोषिष्यत ।

बिभिदथुः बिभिद बिभेद बिभिदिव बिभिदिम। बिभिदे बिभिदाते बिभिदिरे बिभिदिषे। भेत्ता भेत्तारौ भेत्तारः भेत्तासि, भेत्तासे। भेत्स्यति। भेत्स्यते। भिनत्तु भिन्तात् भिन्ताम् भिन्दन्तु भिन्धि, भिन्तात् भिन्तम् भिन्त भिनदानि भिनदाव भिनदाम। भिन्ताम् भिन्दाताम् भिन्दताम् भिन्त्स्व भिन्दाथाम् भिन्ध्वम्। भिनदै भिनदावहै भिनदामहै। अभिनत् अभिन्ताम् अभिन्दन् अभिनः अभिनत्, द् अभिन्तम् अभिन्त अभिन्दम् अभिन्द्व अभिन्द्म। अभिन्त अभिन्दाताम् अभिन्दत अभिन्थाः अभिन्दाथाम् अभिन्ध्वम् अभिन्दि अभिन्द्वहि अभिन्द्महि। भिन्द्यात् भिन्द्याताम् भिन्द्युः। भिन्दीत भिन्दीयाताम् भिन्दीरन्। भिद्यात् भिद्यास्ताम् भिद्यासुः। भित्सीष्ट भित्सीयास्ताम् भित्सीरन्। अभैत्सीत् अभैत्ताम् अभैत्सुः अभैत्सीः। अभिदत् अभिदताम् अभिदन् अभित्त अभित्साताम् अभित्सत। अभेत्स्यत् अभेत्स्यत।

## ३ छिदिर् = द्वैधीकरण, छेदन, फोड़ना।

छिनत्ति। छिन्ते। चिच्छेद चिच्छिदतुः चिच्छिदुः। चिच्छिदे चिच्छिदाते चिच्छिदिरे। छेत्ता। छेत्स्यति। छेत्स्यते। छिनत्तु, छिन्ताम्। अच्छिनत्, अच्छिनत। छिन्द्यात्, छिन्दीत। छिद्यात्, छित्सीष्ट। अच्छैत्सीत्, अच्छिदत्। अछित्त अच्छित्साताम् अच्छित्सत। अच्छेत्स्यत्। अच्छेत्स्यत।

## ४ युजिर् = योग, जोड़ना।

युनक्ति युङ्क्तः युञ्जन्ति। युनक्षि युङ्क्थः युङ्क्थ युनज्मि युञ्ज्वः युञ्ज्मः। युङ्क्ते युञ्जाते युञ्जते युङ्क्षे युञ्जाथे युङ्ग्ध्वे युञ्जे युञ्ज्वहे युञ्ज्महे। युयोज युयुजतुः युयुजुः। युयुजे युयुजाते युयुजिरे। योक्ता। योक्ष्यति, योक्ष्यते। युनक्तु युङ्क्तात् युङ्क्ताम् युञ्जन्तु युङ्ग्धि युङ्क्तात् युङ्क्तम् युङ्क्त। युन-

जानि युनजाव युनजाम । युङ्क्ताम् युञ्जाताम् युञ्जताम् युङ्-
ग्ध युञ्जाथाम् युङ्ग्ध्वम् युनजै युनजावहै युनजामहै । अयुनक्-
ग् अयुङ्क्ताम् अयुञ्जन् । अयुङ्क्त अयुञ्जाताम् अयुञ्जत ।
युञ्ज्यात् । युञ्जीत । युज्यात् । युक्षीष्ट । अयुजत्, अयौक्षीत्
अयुक्त अयुक्षाताम् अयुक्षत । अयोक्ष्यत् । अयोक्ष्यत ।

## ५ रिचिर् = विरेचन, दस्त आना, खाली करना ।

रिणक्ति रिङ्क्तः रिञ्चन्ति, रिङ्क्ते रिञ्चाते रिञ्चते । रिरेच
रिरिचतुः रिरिचुः, रिरिचे रिरिचाते रिरिचिरे । रेक्ता । रेक्ष्यति
रेक्ष्यते । रिणक्तु रिङ्क्ताम् रिञ्चन्तु । रिङ्क्ताम् रिञ्चाताम् रिञ्च-
ताम् । अरिणक् अरिङ्क्ताम् अरिञ्चन्, अरिङ्क्त अरिञ्चाताम्
अरिञ्चत । रिञ्च्यात् ,रिञ्चीत । रिच्यात्, रिक्षीष्ट ।अरिचत्,
अरैक्षीत् । अरिक्त अरिक्षाताम् अरिक्षत । अरेक्ष्यत्, अरेक्ष्यत ।

## ६ विचिर् = पृथग्भाव अलग होना ।

विनक्ति ।विङ्क्ते । विवेच ।विविचे ।वेक्ता। वेक्ष्यति। वेक्ष्यते।
विनक्तु । विङ्क्ताम्। अविनक्। अविङ्क्त । विञ्च्यात् विञ्चीत
विच्यात्। विक्षीष्ट । अविचत्, अवैक्षीत्। अविक्त । अवेक्ष्यत्
अवेक्ष्यत ।

## ७ क्षुदिर् = सम्पेषण, खूंदना, पीसना, चूराकरना।

क्षुणत्ति क्षुन्तः क्षुन्दन्ति । क्षुन्ते क्षुन्दाते क्षुन्दते । चुक्षोद
चुक्षुदतुः चुक्षुदुः । चुक्षुदे चुक्षुदाते चुक्षुदिरे । क्षोत्ता । क्षोत्स्यति
क्षोत्स्यते । क्षुणत्तु क्षुन्ताम् क्षुन्दन्तु क्षुन्धि । क्षुन्ताम् क्षुन्दाताम्
क्षुन्दताम् । अक्षुणत् अक्षुन्ताम् अक्षुन्दन् । अक्षुन्त अक्षुन्दाताम्
अक्षुन्दत । क्षुन्द्यात् । क्षुन्दीत । क्षुद्यात् । क्षुत्सीष्ट । अक्षुदत् ।
अक्षौत्सीत् अक्षौत्ताम् अक्षौत्सुः । अक्षुत्त अक्षुत्साताम् अक्षु-
त्सत । अक्षोत्स्यत्, अक्षोत्स्यत ।

## ८ उच्छृदिर् = दीप्ति, देवन, प्रकाश ।

छृणत्ति । छृन्ते । चच्छर्द । चच्छृदे । छर्दिता । छर्दिष्यति, छर्त्स्यति । छर्दिष्यते छर्त्स्यते । छृणत्तु छृन्ताम् । अछृणत् । अछृन्त । छृन्द्यात् । छृन्दीत । छृद्यात् । छर्दिषीष्ट । अच्छृदत्, अच्छर्दीत् । अच्छृत्त, अच्छर्दिष्ट । अच्छर्दिष्यत्, अच्छर्त्स्यत् । अच्छर्दिष्यत, अच्छर्त्स्यत ।

## ९ उतृदिर् = हिंसा, अनादर ।

तृणत्ति, तृन्ते । ततर्द ततृदतुः ततृदुः । ततृदे ततृदाते ततृदिरे । तर्दिता । तर्दिष्यति, तर्त्स्यति । तर्दिष्यते, तर्त्स्यते । तृणत्तु । तृन्ताम् । अतृणत् । अतृन्त । तृन्द्यात् । तृन्दीत । तृद्यात् । तृत्सीष्ट । अतृदत्, अतर्दीत् । अतर्दिष्ट । अतर्दिष्यत्, अतर्त्स्यत् । अतर्दिष्यत, अतर्त्स्यत ।

---

कलत्रम् = स्त्री । अम्बरम् = वस्त्र, आकाश । अकिञ्चनः = दरिद्र, ग़रीब । कोकः = चकई चकवा । कोविदः = पण्डित । विभवः = ऐश्वर्य्य । तिग्मः = तीक्ष्ण । तुरुष्कः = तुरुकस्तानी । विश्राणनम् = दान । उद्घाटनम् = खोलना । विश्रुतम् = प्रसिद्ध । स्फुटम् = स्पष्ट, साफ़ । वैधुर्यम् = अभाव । काञ्ची = तगड़ी, करधनी । भव्यम् = कुशल । सरलम् = सीधा, सुगम । क्षणदा = निशा, रात्रि । आम्नायः = वेद । खेलनम् = क्रीडन, खेलना । प्रौढः = प्रगल्भ, निपुण । कमनीयम् = सुन्दर । पुष्कलम् = बहुत । मुग्धः = मूर्ख । मोहः = अज्ञान । भ्रामकः = स्यार, घुमाने वाला ।

## भाषा बनाओ ।

मोहं रुणद्धि विमलां कुरुते च बुद्धिम्, सूते च संस्कृतपदव्यवहारशक्तिम् । भिनत्ति वस्त्राणि गतादरोयम् । छिनद्मि

बिल्वं न करोमि होमम् । विनक्तु मोहं न रिणक्तु धर्मम् । रामोऽतृणान्निशाचरान् । कोविदान् भवतो वेद्मि । बालः छृणत्ति कन्दुकम् । स्फुटं न वदिष्यसि बालक ! । तद्वचनादाम्नायस्य प्रामाण्यम् । सरलं वाक्यं त्वया प्रोक्तम् ।

## अथ परस्मैपदिनः ।

### १० कृति = वेष्टन, लपेटना ।

कृणत्ति कृन्तः कृन्तन्ति । चकर्त चकृततुः । कर्तिता । कर्तिष्यति, कर्त्स्यति । कृणत्तु कृन्तात् कृन्ताम् कृन्तन्तु कृन्धि । अकृणत् । कृन्त्यात् । कृत्यात् । अकर्तीत् । अकर्तिष्यत्, अकर्त्स्यत् ।

### ११-१२ तृह् हिसि = हिंसा, मारना, दुःख देना ।

तृणेढि तृण्ढः तृंहन्ति तृणेक्षि तृण्ढः तृण्ढ तृणेह्मि तृंह्वः तृंह्मः । ततर्ह ततृहतुः ततृहुः । तर्हिता । तर्हिष्यति । तृणेढु तृण्ढात् तृण्ढाम् तृंहन्तु तृण्ढि तृण्ढात् तृण्ढम् तृण्ढ तृणहानि तृणहाव तृणहाम, अतृणेट् अतृण्ढाम् अतृंहन् अतृणेट् अतृण्ढम् अतृण्ढ अतृणहम् अतृंह्व । अतृंह्म । तृंह्यात् । तृह्यात् । अतर्हीत् । अतर्हिष्यत् । हिनस्ति हिंस्तः हिंसन्ति । जिहिंस जिहिंसतुः जिहिंसुः । हिंसिता । हिंसिष्यति । हिनस्तु हिंस्तात् हिंस्ताम् हिंसन्तु हिन्धि हिनसानि । अहिनत् अहिंस्ताम् अहिंसन् । हिंस्यात् हिंस्याताम् हिंस्युः । हिंस्यात् हिंस्यास्ताम् हिंस्यासुः । अहिंसीत् । अहिंसिष्यत् ।

### १३ उन्दी = भिगोना, गीला करना ।

उनत्ति उन्तः उन्दन्ति उनत्सि उन्थः उन्थ उनद्मि उन्द्वः उन्द्मः । उन्दाञ्चकार उन्दाम्बभूव, उन्दामास । उन्दिता । उन्दिष्यति । उनत्तु । औनत् औन्ताम् औन्दन् । उन्द्यात् । उद्यात् । औन्दीत् । औन्दिष्यत् ।

## १४ अञ्जू = प्रकट होना, चिकनाकरना । इच्छा, गति ।

अनक्ति अङ्क्तः अञ्जन्ति । आनञ्ज आनञ्जतुः आनञ्जुः आनञ्जिथ, आनङ्क्थ । अञ्जिता, अङ्क्ता । अञ्जिष्यति । अङ्-क्ष्यति अनक्तु अङ्क्तात् अङ्क्ताम् अञ्जन्तु अङ्ग्धि । अनजानि । आनक् आङ्क्ताम् आञ्जन् आनक् आङ्क्तम् आङ्क्त आनजम् आञ्ज्व आञ्ज्म । अञ्ज्यात् । अज्यात् । आञ्जीत् आञ्जिष्टाम् आञ्जिषुः । आङ्क्षीत् । आञ्जिष्यत् , आङ्क्ष्यत् ।

## १५ तञ्चु = संकोचन, सकोड़ना ।

तनक्ति तङ्क्तः तञ्चन्ति । ततञ्च ततञ्चतुः ततञ्चुः । तञ्चिता, तङ्क्ता । तञ्चिष्यति, तङ्क्ष्यति । तनक्तु । अतनक् ग् अतङ्क्ताम् अतञ्चन् । तञ्च्यात् । तच्यात् । अतञ्चीत् , अता-ङ्क्षीत् , अतञ्चिष्यत् , अतङ्क्ष्यत् ।

## १६ ओ—विजी = भय, कांपना ।

विनक्ति विङ्क्तः विञ्जन्ति । विवेज विविजतुः विविजुः । विजिता । विजिष्यति । विनक्तु । अविनक् । विञ्ज्यात् । विज्यात् अविजीत् अविजिष्टाम् अविजिषुः । अविजिष्यत् ।

## १७ शिष्लृ = विशेषण ।

शिनष्टि शिंष्टः शिंषन्ति । शिशेष शिशिषतुः शिशिषुः । शेष्टा । शेक्ष्यति । शिनष्टु । अशिनट् अशिंष्टाम् । अशिंषन् । शिंष्यात् । शिष्यात् । अशिषत् । अशेक्ष्यत् ।

## १८ पिष्लृ = सञ्चूर्ण, पीसना ।

पिनष्टि । पिपेष । पेष्टा । पेक्ष्यति । पिनष्टु । अपिनट् । पिंष्यात् पिष्यात् । अपिषत् । अपेक्ष्यत् ।

## १९ भञ्जो = आमर्दन, भङ्गकरना, तोड़ना, फोड़ना।

भनक्ति भङ्क्तः भञ्जन्ति भनक्षि। बभञ्ज बभञ्जतुः बभञ्जुः बभञ्जिथ, बभङ्क्थ भङ्क्ता। भङ्क्ष्यति। भनक्तु। अभनक्, ग् भञ्ज्यात्। भज्यात्। अभाङ्क्षीत् अभाङ्क्ताम् अभाङ्क्षुः। अभङ्क्ष्यत्।

## २० भुज = पालन, भोजन करना।

यह धातु पालन अर्थ में परस्मैपदी है और भोजन अर्थ में आत्मनेपदी रहता है। भुनक्ति भुङ्क्तः भुञ्जन्ति। बुभोज बुभुजतुः बुभुजुः। भोक्ता। भोक्ष्यति भुनक्तु। अभुनक्। भुञ्ज्यात्। भुज्यात्। अभौक्षीत् अभौक्ताम् अभौक्षुः। अभोक्ष्यत्। भुङ्क्ते। भुञ्जाते भुञ्जते। बुभुजे बुभुजाते बुभुजिरे। भोक्ता। भोक्ष्यते भुङ्क्ताम्। अभुङ्क्त। भुञ्जीत। भुक्षीष्ट। अभुक्त अभुक्षाताम् अभुक्षत अभोक्ष्यत्।

## अथ द्वावात्मनेपदिनौ।

## २१ ञि-इन्धी = दीप्ति, चमक, जलना।

इन्धे। इन्धाञ्चक्रे,इन्धाम्बभूव। इन्धामास।इन्धिता। इन्धिष्यते। इन्धाम्। ऐन्ध। इन्धीत,इन्धिषीष्ट।ऐन्धिष्ट। ऐन्धिष्यत।

## २२ विद = विचारना।

विन्दे विन्दाते विन्दते। विविदे विविदाते विविदिरे। वेत्ता। वेत्स्यते। विन्ताम्। अविन्त। विन्दीत। वित्सीष्ट। अवित्त अवित्साताम् अवित्सत। अवेत्स्यत।

कैङ्कर्यम् = दासत्व, सेवकाई। भाषणम् = कथन। विकत्थनम् = तारीफ। विकटः = विशाल, बड़ा। कटकः = सेना। प्रणालः = पनाला। खटिकः = खड़िया। ताम्रम् = ताँबा। कथं-

कारम् = किसतरह। चिञ्चा = इमलीकावृक्ष। निघ्नम् = अधीन। पारदः = पारा। करण्डिका = पिटारी। आतङ्कः = रोग व रोष।

## भाषा बनाओ।

बालः कृणत्ति पारदम्। व्याघ्रस्तृणेढि बालकम्। उनत्ति वस्त्राणि जलेन भृत्यः। अनक्तु विद्यां न भुनक्तु राज्यम्। तनक्ति पाणी कृपणो धनव्यये। वृक्षा वातेन विजन्ति। सर्पाद् विनक्ति बालकः। शिषन्ति गुरवः शिष्यान्। यवान् पिनष्टि धीवरी। भनक्ति कनकस्य घटं मदीयम्। दध्योदनं न भोक्ष्येऽहं भोक्ष्ये मोदकान् सखे! इन्धते समिधः कुण्डे। विन्ते वेदान् च शास्त्राणि। ताम्ररणाविच्छृन्ति ते।

## संस्कृत बनाओ।

बालक पारे को लपेटता है। बाघ लड़के को मारता है। नौकर पानी से कपड़े भिगोता है। आप विद्या को प्राप्त करें राज्य को न पालें। कंजूस धन के खर्च करने में अपने हाथों को सकोड़ता है। वृक्ष हवासे हिलते हैं। लड़का सांप से डरता है। गुरुजन अपने शिष्यों को विशेष बनाते हैं। धीवरी जौ पीसती है। दो पैसों को वे चाहते हैं।

## अथ तनादिगणप्रकरणम्।

## १ तनु = विस्तार, फैलाव।

तनोति तनुतः तन्वन्ति तनोषि तनुथः तनुथ तनोमि तनुवः तन्वः तनुमः, तन्मः। तनुते तन्वाते तन्वते तनुषे तन्वाथे तनुध्वे तन्वे तनुवहे, तन्वहे तनुमहे, तन्महे। ततान तेनतुः तेनुः तेनिथ तेनथुः तेन ततान, ततन तेनिव तेनिम। तेने तेनाते तेनिरे तेनिषे तेनाथे तेनिध्वे तेने तेनिवहे तेनिमहे। तनिता। तनिष्यति, तनिष्यते। तनोतु, तनुतात् तनुताम् तन्वन्तु। तनु, तनुतात् तनुतम् तनुत तनवानि तनवाव तनवाम। तनुताम् तन्वाताम् तन्वताम्

तनुष्व तन्वाथाम् तनुध्वम् तनवै तनवावहै तनवामहै। अतनोत् अतनुताम् अतन्वन् अतनोः अतनुतम् अतनुत अतनवम् अतनुव, अतन्व, अतनुम, अतन्म। अतनुत अतन्वाताम् अतन्वत अतनुथाः अतन्वाथाम् अतनुध्वम् अतन्वि अतनुवहि, अतन्वहि अतनुमहि अतन्महि। तनुयात् तनुयाताम् तनुयुः।तन्वीत तन्वीयाताम्, तन्वीरन्। तन्यात् तन्यास्ताम् तन्यासुः। तनिषीष्ट तनिषीयास्ताम् तनिषीरन्। अतनीत्, अतानीत् अतनिष्टाम् अतानिष्टाम् अतत, अतनिष्ट अतनिषाताम् अतनिषत, अतथाः, अतनिष्ठाः। अतनिष्यत्, अतनिष्यत।

## २ षणु = दान, देना।

सनोति। सनुते। ससान सेनतुः सेनुः। सेने सेनाते सेनिरे। सनिता। सनिष्यति, सनिष्यते। सनोतु। सनुताम्। असनोत् असनुताम् असन्वन्, असनुत असन्वाताम् असन्वत। सनुयात्। सन्वीत। सन्यात्. सायात्। सनिषीष्ट। असनीत्, असानीत्। असात, असनिष्ट। असनिष्यत्। असनिष्यत।

## ३ क्षणु = हिंसा, दुःख देना।

क्षणोति। क्षणुते। चक्षाण चक्षणतुः चक्षणुः। चक्षणे चक्षणाते चक्षणिरे। क्षणिता। क्षणिष्यति। क्षणिष्यते। क्षणोतु। क्षणुताम्। अक्षणोत्। अक्षणुत। क्षणुयात्। क्षण्वीत। क्षण्यात् क्षणिषीष्ट। अक्षणीत् अक्षणिष्टाम् अक्षणिषुः। अक्षत, अक्षणिष्ट, अक्षथाः अक्षणिष्ठाः। अक्षणिष्यत्, अक्षणिष्यत।

## ४ क्षिणु = हिंसा, मारना, दुःख देना।

क्षेणोति, क्षिणोति। क्षेणुते, क्षिणुते। चिक्षेण चिक्षिणतुः चिक्षिणुः। चिक्षिणे चिक्षिणाते चिक्षिणिरे। क्षेणिता। क्षेणिष्यति। क्षेणिष्यते। क्षिणोतु, क्षेणोतु। क्षिणुताम्, क्षेणुताम्। अक्षिणोत्। अक्षेणोत्। अक्षिणुत, अक्षेणुत। क्षिणुयात्। क्षेणु-

यात् । तिरवीत, तेरवीत । तिएयात् । तिणिषीष्ट । अतेणीत्, अतेणिष्टाम्, अतेणिषुः । अतित, अतेणिष्ट । अतेणिष्यत् । अतेणिष्यत ।

## ५ तृणु = अदन, खाना, चरना ।

तृणोति, तर्णोति । तृणुते, तर्णुते । ततर्ण ततृणतुः । ततृणे ततृणाते । तर्णिता । तर्णिष्यति । तर्णिष्यते । तृणोतु, तर्णोतु । तृणुताम्, तर्णुताम् । अतृणोत्, अतर्णोत् । अतृणुत, अतर्णुत । तृणुयात्, तर्णुयात् । तृणवीत, तर्णवीत । तृण्यात् । तृणिषीष्ट । अतर्णीत् । अतृत, अतर्णिष्ट । अतृथाः, अतर्णिष्ठाः । अतर्णिष्यत् । अतर्णिष्यत ।

## ६ डुकृञ्-कृ = करण, करना, बनाना ।

करोति । कुरुते कुर्वाते कुर्वते कुरुषे कुर्वाथे कुरुध्वे कुर्वे कुर्वहे कुर्महे । चकार चक्रतुः चक्रुः चकर्थ । चक्रे चक्राते चक्रिरे । कर्त्ता । करिष्यति । करिष्यते । करोतु । कुरुताम् कुर्वाताम् कुर्वताम् कुरुष्व कुर्वाथाम् कुरुध्वम् करवै करवावहै करवामहै । अकरोत् अकुरुताम् अकुर्वन् अकरोः अकुरुतम् अकुरुत अकरवम् अकुर्व अकुर्म । अकुरुत अकुर्वाताम् अकुर्वत अकुरुथाः अकुर्वाथाम् अकुरुध्वम् अकुर्वि अकुर्वहि अकुर्महि । कुर्यात् कुर्याताम् कुर्युः । कुर्वीत कुर्वीयाताम् कुर्वीरन् । क्रियात् क्रियास्ताम् क्रियासुः । कृषीष्ट कृषीयास्ताम् कृषीरन् । अकार्षीत् अकार्ष्टाम् अकार्षुः । अकृत अकृषाताम् अकृषत । अकरिष्यत् । अकरिष्यत ।

## अथात्मनेपदप्रकरणम् ।

## ७ वनु = याचन, माँगना ।

वनुते । ववने । वनिता । वनिष्यते । वनुताम् । अवनुत । वन्वीत । वनिषीष्ट । अवनिष्ट, अवत अवनिषाताम् अवनिषत । अवनिष्ठाः, अवथाः । अवनिष्यत ।

## ८ मनु = अवबोधन, मानना, समझना ।

मनुते । मेने । मनिता । मनिष्यते । मनुताम् । अमनुत । मन्वीत । मनिषीष्ट । अमत, अमनिष्ट अमथाः, अमनिष्ठाः । अमनिष्यत ।

### भाषा बनाओ ।

तनोति धर्मं श्रुतिशास्त्रवर्णितम् । गुरुकुलाय सुनोति धनं धनी । क्षिणोति सिंहं विपिने गजः किम् ? सिंहा न तृणवन्ति कदापि घासम् । अयं न सन्ध्यांकुरुते कदाचन । याचको वनुते महीम् । मन्वे वेदमतं परम् । सह वीर्यं करवावहै ।

### संस्कृत बनाओ ।

वेद और शास्त्र में जैसा वर्णन किया है वैसे धर्म को वह फैलाता है । यह धनिक गुरुकुल के लिये धन देता है । क्या हाथी वनमें सिंहको मारता है ? सिंह कभी भी घास नहीं खाते हैं । यह कभी भी संन्ध्या नहीं करता । भिखारी भूमिको माँगता है । मैं वेदमत को सबसे अच्छा मानता हूँ । हम दोनों मिलकर बल को बढ़ावें ।

## अथ क्र्यादिगण प्रकरणम् ।

### १ डुक्रीञ्—क्री, बदलना, खरीदना ।

क्रीणाति क्रीणीतः क्रीणन्ति क्रीणासि क्रीणीथः क्रीणीथ क्रीणामि क्रीणीवः क्रीणीमः । क्रीणीते क्रीणाते क्रीणते क्रीणीषे क्रीणाथे क्रीणीध्वे क्रीणे क्रीणीवहे क्रीणीमहे । चिक्राय चिक्रियतुः चिक्रीयुः चिक्रियिथ, चिक्रेथ, चिक्रियथुः चिक्रिय चिक्राय चिक्रय चिक्रियिव चिक्रियिम । चिक्रिये चिक्रियाते चिक्रियिरे, चिक्रियिषे चिक्रियाथे चिक्रियिध्वे चिक्रिये चिक्रियिवहे चिक्रियिमहे । क्रेता क्रेतारौ क्रेतारः । क्रेतासि क्रेतासे । क्रेष्यति । क्रेष्यते । क्रीणातु क्रीणीतात् क्रीणीताम् क्रीणन्तु क्रीणीहि क्रीणी-

नात् क्रीणीतम् क्रीणीत क्रीणानि क्रीणाव क्रीणाम। क्रीणीताम् क्रीणानाम् क्रीणाताम् क्रीणीष्व क्रीणाथाम् क्रीणीध्वम् क्रीणै क्रीणावहै क्रीणामहै। अक्रीणात् अक्रीणीताम् अक्रीणन् अक्रीणाः अक्रीणीतम् अक्रीणीत अक्रीणाम् अक्रीणीव अक्रीणीम। अक्रीणीत अक्रीणाताम् अक्रीणत अक्रीणीथाः अक्रीणाथाम् अक्रीणीध्वम् अक्रीणि अक्रीणीवहि अक्रीणीमहि। क्रीणीयात् क्रीणीयाताम् क्रीणीयुः। क्रीणीत क्रीणीयाताम् क्रीणीरन्। क्रीयात् क्रीयास्ताम् क्रीयासुः। क्रेषीष्ट क्रेषीयास्ताम् क्रेषीरन्। अक्रैषीत् अक्रैष्टाम् अक्रैषुः। अक्रेष्ट अक्रेषाताम्। अक्रेष्यत्। अक्रेष्यत।

## २ प्रीञ् = तर्पण, तृप्ति, कान्ति।

प्रीणाति। प्रीणीते। पिप्राय पिप्रियतुः पिप्रियुः। पिप्रिये पिप्रियाते पिप्रियिरे। प्रेता। प्रेष्यति, प्रेष्यते। प्रीणातु। प्रीणीताम्। अप्रीणात्। अप्रीणीत। प्रीणीयात्। प्रीणीत। प्रीयात्। प्रेषीष्ट। अप्रैषीत्। अप्रेष्ट। अप्रेष्यत्, अप्रेष्यत।

## ३ श्रीञ् = पाक, पकाना।

श्रीणाति। श्रीणीते। शिश्राय। शिश्रिये। श्रेता। श्रेष्यति। श्रेष्यते। श्रीणातु। श्रीणीताम्। अश्रीणात्। अश्रीणीत। श्रीणीयात्, श्रीणीत। श्रीयात्। श्रेषीष्ट। अश्रैषीत्। अश्रेष्ट। अश्रेष्यत्/ अश्रेष्यत।

## ४ मीञ् = हिंसा, दुःख देना।

मीनाति। मीनीते। ममौ मिम्यतुः मिम्युः ममिथ, ममाथ मिम्यथुः मिम्य ममौ मिम्यिव मिम्यिम। मिम्ये मिम्याते मिम्यिरे। माता। मास्यति। मास्यते। मीनातु। मीनीताम्। अमीनात्। अमीनीत। मीनीयात्। मीनीत। मीयात्। मासीष्ट। अमासीत्। अमास्त। अमास्यत्, अमास्यत।

## ५ षिञ् बन्धन, बांधना।

सिनाति। सिनीते। सिषाय सिष्यतुः सिष्युः। सिष्ये

ष्याते। सेता। सेष्यति। सेष्यते। सिनातु। सिनीताम् सिनात्। असिनीत। सिनीयात्। सिनीत। सीयात्। सेषीष्ट सैषीत्। असेष्ट। असेष्यत्, असेष्यत।

## ६ स्कुञ् = आप्रवण, कूदना, उछलना।

स्कुनाति, स्कुनोति। स्कुनीते, स्कुनुते। चुस्काव चुस्कुवतुः चुस्कुवुः। चुस्कुवे। स्कोता। स्कोष्यति, स्कोष्यते। स्कुनोतु, स्कुनातु। स्कुनीताम्, स्कुनुताम्। अस्कुनात्, अस्कुनोत्। अस्कुनीत, अस्कुनुत। स्कुनीयात्, स्कुनुयात्। स्कुनीत, स्कुन्वीत। स्कूयात्। स्कोषीष्ट। अस्कौषीत्। अस्कोष्ट। अस्कोष्यत्। अस्कोष्यत।

## ७, ८, ९, १० स्तम्भु, स्तुम्भु, स्कम्भु, स्कुम्भु = रोकना।

ये सौत्र परस्मैपदी चार धातु हैं। स्तभ्नाति, स्तभ्नोति स्तभ्नीतः स्तभ्नन्ति। तस्तम्भ तस्तभतुः तस्तभुः तस्तम्भिथ तस्तभथुः तस्तभ, तस्तम्भ तस्तभिव तस्तभिम। स्तम्भिता। स्तम्भिष्यति। स्तभ्नातु। अस्तभ्नात्। स्तभ्नीयात्। स्तभ्यात्। अस्तभत् अस्तम्भीत्। अस्तम्भिष्यत्। इसीप्रकार स्तम्भु आदि के रूप भी जानना।

## ११ युञ् = बन्धन, बाँधना।

युनाति। युनीते। युयाव युयुवतुः युयुवुः युयविथ, युयोथ। युयुवे युयुवाते युयुविरे। योता। योष्यति, योष्यते। युनातु। युनीताम्। अयुनात्। अयुनीत। युनीयात्। युनीत। यूयात्। योषीष्ट। अयौषीत् अयौष्टाम् अयौषुः। अयोष्ट अयोषाताम् अयोषत। अयोष्यत्। अयोष्यत।

## १२ क्नूञ् = शब्द करना, कूँकूं करना।

क्नूनाति। क्नूनीते। चुक्नाव। चुक्नुवे। क्नविता। क्नवि-

ष्यति । क्नविष्यते । क्नूनातु । क्नूनीताम् ।अक्नूनात् । अक्नूनीत । क्नूनीयात् । क्नूनीत । क्नूयात् । क्नविषीष्ट । अक्नावीत् अक्नाविष्टाम् अक्नाविषुः । अक्नविष्ट । अक्नविष्यत्, अक्नविष्यत ।

## १३ द्रूञ् = हिंसा ।

द्रूणाति, द्रूणीते । दुद्राव । दुद्रुवे ।। द्रविता । द्रविष्यति । द्रविष्यते । द्रूणातु । द्रूणीताम्। अद्रूणात्। अद्रूणीत । द्रूणीयात् । द्रूणीत, द्रूयात् । द्रविषीष्ट । अद्रावीत्, अद्रवीत् : अद्रविष्ट । अद्रविष्यत् । अद्रविष्यत ।

## १४ पूञ् = पवन, शोधन, पवित्रता ।

पुनाति पुनीते । पुपाव पुपुवतुः पुपुवुः । पुपुवे पुपुवाते पुपुविरे । पविता । पविष्यति । पविष्यते । पुनातु । पुनीताम् अपुनात् । अपुनीत । पुनीयात् । पुनीत । पूयात् । पविषीष्ट । अपावीत् अपाविष्टाम् अपाविषुः । अपविष्ट अपविषाताम् अपविषत । अपविष्यत् । अपविष्यत । एवं लूञो रूपाणि ।

## १५ स्तॄञ् = आच्छादन, ढांकना ।

स्तृणोति । स्तृणीते । तस्तार तस्तरतुः तस्तरुः । तस्तरे तस्तराते तस्तरिरे । स्तरिता, स्तरीता। स्तरिष्यति, स्तरीष्यति। स्तरिष्यते, स्तरीष्यते । स्तृणातु । स्तृणीताम् । अस्तृणात् अस्तृणीत । स्तृणीयात् । स्तृणीत । स्तीर्यात् । स्तीर्षीष्ट, स्तरिषीष्ट । लुङ्-अस्तारीत् अस्तारिष्टाम् अस्तारिषुः। आ० अस्तरिष्ट अस्तरिषाताम् अस्तरिषत, अस्तरीष्ट अस्तीर्ष्ट । लृङ्-अस्तरिष्यत् अस्तरीष्यत् । आ० अस्तरिष्यत, अस्तरीष्यत ।

## १६ कॄञ् = हिंसा, दुःख देना ।

कृणाति, कृणीते । चकार चकरतुः चकरुः । चकरे चकराते चकरिरे । करिता, करीता । करिष्यति, करीष्यति । करिष्यते,

करीष्यते । कृणातु । कृणीताम् । अकृणात् । अकृणीत । कृणीयात् । कृणीत । कीर्यात् । कीर्षीष्ट, करिषीष्ट, । लुङ्-अकारीत्, अकरिष्ट । अकरिष्यत्, अकरीष्यत् । अकरिष्यत, अकरीष्यत ।

## १७ वृङ् = वरण, स्वीकार ।

वृणाति, वृणीते । ववार, ववरे । वरिता, वरीता । वरिष्यति वरीष्यति । वरिष्यते, वरीष्यते । वृणातु । वृणीताम् । अवृणात् अवृणीत । वृणीयात्, वृणीत । वूर्यात्, वरिषीष्ट, वूर्षीष्ट । लुङ्-अवारीत् अवारिष्टाम् अवारिषुः । आ०-अवरिष्ट, अवरीष्ट, अवूर्ष्ट अवरिषातास् अवरिषत । अवरिष्यत्, अवरीष्यत् । अवरिष्यत, अवरीष्यत ।

## १८ धूञ् = कंपन, कांपना, हिलना ।

धुनाति । धुनीते । दुधाव दुधुवतुः दुधुवुः । दुधुवे दुधुवाते दुधुविरे । धविता । धोता । धविष्यति । धोष्यति । धविष्यते, धोष्यते । धुनातु । धुनीताम् । अधुनात् । अधुनीत । धुनीयात् । धुनीत । धूयात् । धविषीष्ट, धोषीष्ट । अधौषीत् . अधावीत् । अधोष्ट, अधविष्ट । अधविष्यत् अधोष्यत् । अधविष्यत, अधोष्यत ।

## १९ ग्रह = उपादान, लेना पकड़ना ।

गृह्णाति । गृह्णीते । जग्राह जगृहतुः जगृहुः । जगृहे जगृहाते जगृहिरे । ग्रहीता । ग्रहीष्यति । ग्रहीष्यते । गृह्णातु गृहाण । गृह्णीताम् गृह्णाताम्, गृह्णताम् । गृह्णीष्व । अगृह्णात् । अगृह्णीत । गृह्णीयात् । गृह्णीत । गृह्यात् । गृहीषीष्ट । अग्रहीत् अग्रहीष्टाम् अग्रहीषुः । अग्रहीष्ट अग्रहीषातास् अग्रहीषत । अग्रहीष्यत् । अग्रहीष्यत ।

## अथ परस्मैपदप्रकरणम् ।

## २० कुष = निष्कर्ष, निकलना, निचोणना, कूदना ।

कुष्णाति । चुकोष । कोषिता । कोशिष्यति । कुष्णातु । कुषाण

अकुष्णात् । कुष्णीयात् । कुष्यात् । अकोषीत् । अकोषिष्यत् ।

## २१ अश = भोजन, खाना ।

अश्नाति । आश आशतुः आशुः । अशिता । अशिष्यति । अश्नातु । अशान । आश्नात् । अश्नीयात् । अश्यात् । आशीत् । आशिष्यत् ।

## २२ मुष = स्तेय, चुराना ।

मुष्णाति । मुमोष । मोषिता । मोषिष्यति । मुष्णातु, मुषाण । अमुष्णात् । मुष्णीयात् । मुष्यात् । अमोषीत् । अमोषिष्यत् ।

## २३ ज्ञा = अवबोधन, जानना ।

जानाति । जज्ञौ । ज्ञाता । ज्ञास्यति । जानातु । अजानात् । जानीयात् । ज्ञेयात्, ज्ञायात् । अज्ञासीत् । अज्ञास्यत् ।

## अथ आत्मनेपदी ।

## २४ वृङ् = सम्भक्ति, सेवा करना ।

वृणीते वृणाते वृणते । वव्रे वव्राते वव्रिरे । वरिता, वरीता । वरिष्यते, वरीष्यते । वृणीताम् । अवृणीत । वृणीत । वरिषीष्ट, वरीषीष्ट । अवरिष्ट, अवरीष्ट अवृत । अवरिष्यत । अवरीष्यत ।

—o—

ग्रन्थिलम् = गाँठदार । घोषणा = मुनादी । चतुष्पथः = चौराहा । चापलम् = चञ्चलता । परिषद्बलः = सभासद् । पलगण्डः = राज, कारीगर । प्रतिग्रहः = दानलेना । प्रोञ्छनम् = पोंछना । बोधनम् = विज्ञापन, जताना । भासुरम् = चमकने वाला । तुन्दिलः = लम्बोदर, बड़े पेट वाला । लावणम् = नमकीन । अवतंसः = भूषण । कोणः = कोन । इत्वरः = नीच । अलिन्दः = चौंतरा । कङ्कतिका = कंघा, कंघी । खल्या = खलिहान । षण्ढः = नपुंसक । पत्रमञ्जूषा = लेटरबक्स । अद्यत्वे = अब ।

## भाषा बनाओ ।

क्रीणामि दुग्धं पणकद्वयस्य । प्रीणाति बान्धवजनानतिथीन् पृणोति । श्रीणाति शाकं झटिति कथं न । मीनन्ति मीनान् शिशवस्त्वदीयाः । स्कुवन्ति कुड्यां भवदीयशिष्याः । सिनन्ति षण्ढा न कदापि शूरान् । पथिकान् स्तभ्नाति तस्करः । रज्वा योष्यन्ति तस्करान् । क्नूनाति नित्यं शकटं त्वदीयम् । दृणाति सिंहो वृषभान् मदीयान् । दृणाति सिंहः सकलान् क्रमेलान् । पुनन्तु मा देवजनाः । स्तृणातु वस्त्रैः सकलं शरीरम् । कृणन्ति कोलान् विपिने वनेचराः । वचो मे न वरिष्यति । धूनोति चम्पकवनानि धुनोत्यशोकम् । विधर्मिणो वेदमतं गृह्णन्ति । कुष्णाति शाटं भवता न भृत्यः । अशिष्यन्ति न मे शिष्याः । मोषिष्यन्ति न तस्कराः? । जानीयात् प्रेषणे भृत्यान् । वृणीते स्वामिनं भार्या ।

## संस्कृत बनाओ ।

दो पैसे का दूध लेता हूँ । भाई और अतिथियों को तृप्त करता है । वह शाक शीघ्र क्यों नहीं पकता । तुम्हारे लड़के मछलियों को मारते हैं । आपके शिष्य टट्टी को कूदते हैं । नपुंसक कभी शूरों को नहीं बाँधते हैं ? । चोर रास्तेगीरों को रोकता है । रस्सी से चोरों को बाधेंगे । तुम्हारी गाड़ी नित्य कूंजती है । मेरे बैलों को सिंह मारता है । सिंह सब ऊँटों को मारता है । विद्वान् लोग मुझको पवित्र करें । सब शरीर को वस्त्रों से ढांक । भील वन में सुअरों को मारते है । आप मेरे वचन को स्वीकार नहीं करेंगे । चमेली के बन तथा अशोक वृक्ष को कँपाता है । अन्य मत वाले भी अब वेदमत को स्वीकार करते हैं । आपका नौकर कपड़े को निचोड़ता नहीं । मेरे छात्र नहीं खावेंगे । चोर नहीं चुरावेंगे ? नोकरों को भेजने पर जाने । पत्नी पति को स्वीकार करती है ।

# अथ चुरादिगणप्रकरणम् ।

## १ चुर = स्तेय, चुराना ।

चोरयति चोरयतः चोरयन्ति । चोरयते चोरयेते चोरयन्ते चोरयाञ्चकार चोरयाञ्चक्रतुः चोरयाञ्चक्रुः । चोरयाञ्चकर्थ । चोरयामास । चोरयाम्बभूव । चोरयाञ्चक्रे । चोरयिता । चोरयिष्यति, चोरयिष्यते । चोरयतु । चोरयताम् । अचोरयत् । अचोरयत । चोरयेत् । चोरयेत । चोर्यात् । चोरयिषीष्ट । अचूचुरत् । अचूचुरत । अचोरयिष्यत् । अचोरयिष्यत ।

## २ कथ = वाक्यप्रबन्ध, बोलना कहना ।

कथयति । कथयते । कथयाञ्चकार । कथयाञ्चकर्थ । कथयामास । कथयाम्बभूव । कथयाञ्चके । कथयिता । कथयिष्यति, कथयिष्यते । कथयतु । कथयताम् । अकथयत् । अकथयत । कथयेत् । कथयेत । कथ्यात् । कथयिषीष्ट । अचकथत् । अचकथत । अकथयिष्यत् । अकथयिष्यत ।

## ३ गण = सङ्ख्यान, गिनना ।

गणयति । गणयते । गणयाञ्चकार । गणयाञ्चकर्थ । गणयामास । गणयाम्बभूव । गणयाञ्चके । गणयिता । गणयिष्यति । गणयिष्यते । गणयतु । गणयताम् । अगणयत् । अगणयत । गणयेत् गणयेत । गण्यात् । गणयिषीष्ट । अजीगणत्, अजगणत् । अजीगणत अजगणत । अगणयिष्यत्, अगणयिष्यत ।

क्षौरम् = हजामत । शौचम् = शुद्धि, मल त्याग । शोथः = सूजन । शोणितम् = खून । श्मश्रुलः = दढ़ियल । प्रतिश्यायः = ज़ुकाम । विसूचिका = हैज़ा । निर्झरः = झरना । निर्वाहः = गुज़ारा । निर्वापणम् = बीज बोना । अवसरः = मौका । आमयः = रोग । उन्मूलनम् = उखाड़ना । कर्णजलूका = कानखजूरा । अभिरामम् = सुन्दर । अभिव्यक्तम् = रोशन ।

कर्पटः-चीथड़ा। कवटः = पैंठ। कूर्चम् = दाढ़ी। क्वाथः = काढ़ा। परिणामः = नतीजा। संकटम् = दुःख। शृङ्गकम् = पिचकारी। विकटम् = टेढ़ा। मल्लता = पहलवानी।

## भाषा बनाओ।

अचूचुरच्चन्द्रमसोऽभिरामताम्। कथं न कथयानि कथां कवीनाम्। मनस्वी कार्यार्थी गणयति दुःखं न च सुखम्। क्षौरं कस्य भविष्यति। प्रतिश्यायं न कामये। अवसरं न जहातु कदाचन। चौरस्य कूर्चे हि तृणं प्रसिद्धम्। क्वाथं पिबन्ति रोगिणः। सङ्कटं ते गमिष्यति। मुषाण रत्नानि हरामराङ्गनाः।

## संस्कृत बनाओ।

चन्द्रमा की शोभा को चुरा लिया। कवियों की कथा क्यों न कहूँ?। कार्य को पूर्ण करने वाला विचारशील पुरुष दुःख और सुख को नहीं गिनता। हजामत किसकी होगी। मैं जुकाम को नहीं चाहता। मौक़े को कभी न छोड़ो। चोर की दाढ़ी में तिनका यह बात प्रसिद्ध है। रोगी काढ़ा पीते हैं। तेरा दुःख दूर होजावेगा। रत्नों को चुराया और देवों की स्त्रियों को हरा।

---

द्वीपम् = टापू। सरोवरः = झील, ताल। जनसंख्या = आबादी। शिलाकणम् = कंकड़ी। शिलाखण्डम् = बटिया। उद्गमः = निकास। धरातलम् = भूमि। तापमापकयन्त्रम् = थरमामीटर। शतकम् = शताब्दी, सदी। अराजकता = भ्रम, अन्धाधुन्धी। वितरणम् = बांटना। न्यूनता = कमी। करः = हाथ, हाथी की सूंड़ व किरण। करीयम् = महसूली। निर्वाचनम् = चुनाव। निर्वाचकः = चुनने वाला। आदर्शः = नमूना, दर्पण। आधिक्यम् = ज्यादती। वैमनस्यम् = वैरभाव। दण्ड्यः = सज़ा के लायक़। सौष्ठवम् = अच्छापन। गरिष्ठः = बहुत ही बड़ा। गोष्ठम् = गोहरा।

## भाषा बनाओ ।

यूयं ब्रूत कियन्ति द्वीपानि सन्ति । अस्मिन् सरोवरे कस्य पशवश्चरन्ति। अस्य नगरस्य जनसंख्या कियती विद्यते । गङ्गायाः उद्गमः कस्मात् स्थानाज्जायते । तापमापकयन्त्रेण वैद्यो ज्वरं मिमीते । कस्मिञ्छतके विक्रमादित्योऽभूत् । अराजकतया बहूनि दुःखानि जायन्ते । गोधूमानां वितरणमभून्नवा ? अस्मिन् विषये मयि न्यूनता विद्यते । करं कः आदास्यते । कतीयाणि वस्तूनि तु भवतां समीपे न सन्ति ? अस्य समाजस्य निर्वाचनम् कदा भविष्यति । इदं तेषामाधिक्यमस्ति । वैमनस्येन महती हानिर्जायते । जम्बूद्वीपे भरतखण्डे कृष्णपुर्यां वसाम्यहम् ।

मान्द्यम् = धीमापन, मूर्खता । मार्गणम् = तलाश । उद्वर्त्तनम् = उठना बैठना, बैठक । अन्तरालम् = बीच । मनोरमम् = सुन्दर । मन्दाक्षम् = लज्जा । मन्दोष्णम् थोड़ा गर्म । मसिधानम् = दावात । महोन्नतम् = बहुत ऊँचा । मांसलम् = मोटा । भर्त्सनम् = घुड़की । भालम् = ललाट । भुग्नम् = झुका हुआ । भृष्टम् = भुना हुआ । प्राचीरम् = हाता, परकोटा, बाड़ा । फेनम् = झाग । फेनिलम् = झागदार । सीसकम् = सीसा । बीभत्सम् = घृणित । बुसम् = भुस । भक्तम् = भात । भङ्गित्वम् = जालसाज़ी । शूल्यम् = कबाब । भर्त्रित्वम् = भुर्त्ता, भुनी चीज़ ।

## भाषा बनाओ ।

इदं युष्माकं मान्द्यं समीक्ष्य विषीदामो वयम् । अस्मदीयानि यानि वस्तूनि चौरैरपहृतानि तेषामिदानीं मार्गणम् भवति । व्यायामे बाहुल्येनोद्वर्त्तनं न कर्त्तव्यम् । तैरन्तराले पञ्च मोदका गृहीताः । मनोरममिदं सद्म । मन्दोष्णं जलमिदम् । मसिधानं ददामि ते । महोन्नतं कस्य गृहं मनोरमम् । उचितं भर्त्सनं तस्य । भाले शोभते तिलकम् । प्राचीरे पशवश्चरन्ति वृक्षान् ।

भवतः फेनिलं क्षीरम् । सीलकस्यास्य वृक्षस्य नीचैश्चरन्ति वायसाः । बीभत्सं तवेदं कर्म । लिहा बुसं न खादन्ति शुकाः पललं हि कर्हिचित् । भुक्तं भक्तं त्वया सर्वं महेन्द्रः किमशिष्यति। बीभत्समिदं कार्यं नहि कार्यं कदाचन ।

मानग्रन्थिः = अपराध । मण्डपः = बंगला, कोठी । मत्स्यण्डी = मिश्री । मल्लभूः = अखाड़ा । भ्रमरकः = जुल्फें, पट्टे । माक्षिका = मक्खी । भङ्गा = भाँग । भारकः = कुली । भृतकः = मज़दूर । मणिबन्धः = हाथ का पहुँचा, कलाई । छत्वरः = छप्पर । प्रस्रावः = पेशाब, मूत्र । वणिग्भावः = वाणिज्य । बलाटः मूंग । भण्डः = भांड । सन्निभम् = समान । शिक्यम् = छींका । लाक्षा = लाख । शम्बः = सान, शान । राजस्वम् = कर, मालगुज़ारी । उपद्रवः = उत्पात झगड़ा । रोरुदा = बहुत रोना । लाघवम् = लघुता, हलकापन । लाङ्गलम् = हल । नूपुरम् = बिछुआ।

## भाषां विरचयत ।

मम मानग्रन्थिर्नहि वर्त्तते प्रभो ! न मण्डपे सन्ति सभासदः सुभे । मद्कटो धवलः प्रतिभाति मे । वरं न मल्लभूरियम् । भ्रमरका यवनस्य च कीदृशाः । माक्षिका निपतन्ति मुहुर्मुहुः । भङ्गां पिबन्ति मनुजा अनुजास्त्वदीयाः । भारं वहन्ति भारकाः । भृतकाः कार्यं न कुर्वन्ति । जलं स्रवति छत्वरात् । प्रस्रावं कर्तुमिच्छामि आज्ञापयतु मे गुरो ? । वणिग्भावं करोम्यहम् । मह्यं न रोचते सूपो बलाटस्य कदाचन । सायणस्य संनिभं भाष्यं महीधरस्य न विद्यते । शिक्ये मिष्टं न विद्यते । लाक्षायां रञ्जितं वस्त्रम् । राजस्वं न ददाति सः । उपद्रवं न कुर्वन्तु भारतीयाः समाः प्रजाः । लघुता हेया सदा सर्वैर्महत्ताधार्यतां सदा ।

आर्यमिश्रः = अतिश्रेष्ठ । मुञ्जः = मूंज । मूर्च्छालः = बेहोश । मेन्धी = मेंदी । वारः = क्रम, बारी । वार्त्तम् = आरोग्य, कुशल ।

धूर्त्तः = लुच्चा । विष्टिः = वेतन, तनख़्वाह । विसृष्टिः – छुट्टी । वैकल्यम् = घबराहट । शोणम् = सिन्दूर । चिक्कणम् = चिकना। भावितम् = छौंका हुआ । पृथुकः = मुरमुरा । जेमनम् = भोजन । सौरभेयः = बैल । सौरभेयी = गाय । कीलकः = खूंटी, कील । नैमेयः = लेनदेन । सत्यङ्कारः = बयाना । मिथ्याटोपः = झूठा गर्व । रिक्थम् = धन । प्रावारः = डुपट्टा । न्यासः = धरोहर । विलक्षः = विस्मित, हैरान । निदाघः = ग्रीष्म ऋतु । निर्वेदः = उदासीनता, वैराग्य । कण्ठीरवः = सिंह । अल्पवयस्कः = कम उम्र वाला । शाणम् = कसौटी, सान । तीव्रविरोधः = सख़्त मुख़ालफ़त । शिक्षकः = पढ़ाने वाला । भक्षकः = खाने वाला ।

श्रीमन्तो भवन्तो भगवन्त आर्यमिश्राः प्रणम्यन्ते मया । मुग्धस्य किं लक्षणम् । अद्य मम वारस्तत्र गमनस्य किम् ? । स मूर्च्छालोऽस्ति । न धूर्तं द्रष्टुमिच्छामि । वैकल्यं विद्यते कथम् । उदरे शोथो न विद्यते । कथं ते चिक्कणं वस्त्रम् । भावितं शाकं नास्ति । पृथुकांश्चर्वन्ति बालकाः । जेमनाय व्रजामि भोः ! सौरभेयीं पश्यति सौरभेयः । नैमेयो भवति मे गृहे । सत्यङ्कारं ददाम्यहम् । न धृतं कीलके पटम् । गृहं गतो यशोधरः । कण्ठीरवस्य शब्दो वर्वर्ति एषः । दैवीविचित्रा गतिः ।

प्रगुणः = सीधा । प्रत्यग्रः = नवीन । अनुपदम् = पीछे । द्रुतम् = शीघ्र भुग्नम् = टूटा हुआ । प्रार्थितम् = माँगा हुआ । छन्नम् = ढका हुआ । निष्प्रभम् = निस्तेज । छिन्नम् = कटा हुआ । स्रस्तम् = चू गया । विन्नम् = प्राप्त, मिला । नुन्नम् = भेजा । क्लिन्नम् = आर्द्र, गीला । प्रतिपन्नम् = जाना । माणवकः = बालक । वैशद्यम् = विमल, साफ़ । आविलम् = गदला। कालुष्यम् = कुविचार, पाप । साहसम् = हौसला । वप्रम् = घेरा, सफ़ील, खेत । ऐकागारिकः = चोर । उदर्कः = परिणाम । शाकुनिकः = चिड़ीमार । उदन्तः = वृत्तान्त, हाल । चारः =

विश्वासघाती, उचक्का। विकर्मस्थः = बदचलन। निर्यासः = गोंद। शिक्थम् = मोम। वयस्यः = प्रिय। मौहूर्तिकः = ज्योतिषी। वृक्षशायिका = गिलहरी। गृहगोधा = छिपकली।

न वञ्चनीयाः प्रगुणा नरास्त्वया। प्रत्यग्रा बालकाः सर्वे आगच्छन्तु ममान्तिके। अनुपदं शिशवो विचरन्ति ते। धृतं द्रुतं समं च ते। भुग्नानि काष्ठानि न सन्ति तत्र। न प्रार्थितं कथं पूर्वम्। दाघ छन्नं न विद्यते। निष्प्रभं ते मुखं कथम्? छिन्नानि वस्त्राणि समानि तानि। स्रस्तं मम जलं सर्वम्। भवन्नुन्नं दलं विन्नं धूत्तं प्रतिपन्नं समम्। क्लिन्नानि वस्त्राणि समानि तस्य। वैशद्यं चाविलं जलम्? कालुष्यं भवता हेयम्। हसेन प्रसीदामि श्यामसिंहस्य वर्मणः। विषीदामि तव कर्मणा। इमे किमे कागारिकाः? शाकुनिको विद्यते तत्र। उदन्तं तस्य जानीथ महेन्द्रस्य महात्मनः।

अभिजनम् = वंश, जन्मभूमि। आनायः = जाल। कैतवम् = छुद्मता। दोषज्ञः = पण्डित। अभ्यर्णम् = पास, नज़दीक। वर्करः = बकरा। शल्यकः = सेही। अनूकम् = वंश। अर्गलम् = ज़ञ्जीर। कीशः = बन्दर। कोकः = भेड़िया। वार्द्धक्यम् = बुढ़ापा। तुमुलम् = भारी। अभ्रम् = आकाश, बादल। कलरवः = कबूतर। महीध्रः = पर्वत। गुदम् = मलेन्द्रिय। उपस्थः = मूत्रेन्द्रिय। मुष्कः = अण्डकोष। वक्षः = छाती। कक्षः = बग़ल। भुजः = बाहु, बाँह। कर्परः = कुहनी। पञ्चशाखः = हाथ। नखरम् = नख, नाखून। वक्त्रम् = मुख। वक्रम् = टेढ़ा। रदनच्छदः = ओष्ठ, होंठ। काकुदम् = तालु। अलिकम् = ललाट। श्रवणम् = कान। कुन्तलः = बाल। चूडा = शिखा। चण्डातकम् = लहँगा। मोघम् = निरर्थक, फ़िज़ूल। जीमूतः = मेघ। आप्लवः = स्नान। धन्यधन्यः = भाग्यवानों में भाग्यवान्। मान्यमान्यः = माननीयों में श्रेष्ठ। राजेष्टिनम् = रजिष्टर्ड।

अभिजनं भवतां क्व च विद्यते। आनायें सन्ति कलरवाः। ते कुर्वन्ति न कैतवम्। दोषज्ञेषु वसन्ति निर्मलगुणाः। स तस्य नाऽभ्यर्णमुपैति सर्वदा। कोकः प्रयाति खरवानरयूथमध्ये। कण्टकं शल्यकस्येदम् लेखनी मे भविष्यति। अनूकमुत्तमं तस्य यस्य वृत्तं न दूषितम्। स कोशो ददत्यर्गलम्। न कारकाः सन्ति प्रतारका इमे। शिवराजस्य तुमुलयुद्धस्योदन्तं वर्णयामि किम्? वप्रे वपन्ति बीजानि दृढानि यानि तानि ते। हयस्य आनने कविका अति स्थूला च विद्यते। दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम्। मुखप्रक्षालनात् पूर्वं गुदप्रक्षालनं यथा। नखराणि त्वदीयानि कथं दीर्घाणि सन्ति भो?। वक्त्रं वक्रं कृतं कथम्? मोघं वचो न वक्तव्यम्। चण्डातकं धारयति यशोदा। सत्यं दुग्धदग्धो जनस्तक्रमपि व्यजनैर्वीजयित्वा पिबति। धनं धर्मेण चार्जयेत्। ईश्वरं सर्वदा ध्यायेत्। न कर्मपापमाचरेत्। भगवन् भावनां शुद्धां सदा करोति मे प्रभो! धन्यधन्यमहं वन्दे। मान्यमान्यान् नमामि तान्।

सर्गस्थितिप्रलयहेतुमचिन्त्यशक्तिं
विश्वेश्वरं विदितविश्वमनन्तमूर्त्तिम्।
निर्मुक्तबन्धनमपारसुखाम्बुराशिं
वेदप्रदं विमलबोधमजं नमामि ॥ १ ॥





तमसो मा ज्योतिर्गमय

* ओ३म् *

संस्कृत-शिक्षा—

# पञ्चमो-भागः ।

प० जीवारामोपाध्यायप्रणीतः ।

तेनैव

मुरादाबादनगरे

स्वकीये सरस्वतीनाम्नि मुद्रणयन्त्रे

अङ्कयित्वा प्राकाश्यं नीतः ।

Printed and Published by,
Pt. JIWARAM UPADHYAYA,
AT THE SARASWATI PRESS,
MORADABAD.

पञ्चावृत्तौ २००० } संवत १९८८ विक्रमीये { मूल्यम् ।=)॥

# अस्मत्प्रकाशितपुस्तकानां सूचीपत्रम् ।

१ अष्टाध्यायीभाष्यम् द्वितीयं संस्करणं संस्कृतभाषाभाष्यविभूषितम् मू० ६)
२ लघुकौमुदी सरलाटीकोपेता प्रत्येकप्रयोगसाधनसहिता २॥) सजिल्द २॥।-)
३ सिद्धान्तकौमुदी स्त्रीप्रत्ययान्ता प्रथमखण्डपरिमिता मू० २।) सजिल्द २॥-)
४ सरस्वतीकोषः-दशसहस्रादप्यधिकशब्दविवरणोपेतः मू० १) सजिल्द १।)
५ रघुवंशसर्गपञ्चतयम् छात्रबोधिनीटीकासहितम् मू० १=)
६ किरातार्जुनीयस्य आद्यं सर्गत्रयम् ,, ,, ॥।=)
७ शिशुपालवधस्य आद्यं सर्गद्वयम् ,, ,, ॥=)
८ रामायणमहाभारतयोः (प्रथमपरीक्षासङ्कलितांशः) ,, ।=)
९ मेघदूतम्—छात्रबोधिनीटीकासहितम् ,, ,, ।≡)
१० तर्कसंग्रहः—न्यायबोधिनीपदकृत्यटीकाद्वयसहितः ,, ,, ।=)
११ तर्कसंग्रहः—भाषाटीकोपेतः मू० ।) पञ्चतन्त्रम्—सतिलकम् मू० १॥।)
१२ पञ्चतन्त्रस्य पञ्चमं तन्त्रं (अपरीक्षितकारकम्) भाषार्थ सहितम् मू० ।=)
१३ हितोपदेशः—भाषार्थसहितः १।) यजुर्वेदसंहिता (मूलमात्रा) ॥।)
१४ प्रथमपरीक्षाया एकोनत्रिंशद्वर्षाणां सर्वविषयाणां प्रश्नपत्राणि ,, ॥।=)
१५ मध्यमापरीक्षाया अष्टाविंशतिवर्षाणां सर्वविषयाणां प्रश्नपत्राणि ,, १)
१६ सोत्तरप्रथमाप्रश्नावली [ उत्तरसहिता ] ,, ॥।=)
१७ संस्कृतशिक्षायाः प्रथमो भागः मू० ≡) द्वितीयोभागः ,, ।)
तृतीयोभागः मू० ।-) चतुर्थोभागः मू० ॥) पञ्चमोभागः ,, ।=)॥
षष्ठोभागः मू० ॥) अमरकोषः अनुक्रमणिकासहितः ॥।-) पुरुषपरीक्षा ॥=)
१८ संस्कृतपत्रप्रबोधः ≡) स्त्रीपत्रप्रबोधः ।) नीतिशतकम् ≡) श्रुतबोधः-
सतिलकः =) चाणक्यनीतिः -)॥ कविरहस्यम् ।) मूलहितोपदेशः ॥=)
१९ लघुकौमुदी सटिप्पनीका मूलमात्रा ... ... ... ॥)
२० बालसंस्कृतपाठः प्रथमोभागः=) द्वितीयोभागः ।) अष्टाध्यायीसूत्रपाठः।-)
२१ आदर्शगीतावली प्रथमभाग =)॥, द्वितीयभाग ≡), तृतीयभाग ।-)

पुस्तकें मिलने का पता—

**श्री० पं० जीवारामोपाध्याय,**

अध्यक्ष—सरस्वती-प्रेस, किसरौल-मुरादाबाद

॥ ओ३म् ॥

# संस्कृत-शिक्षा-

# पञ्चमोभागः।

कर्त्तारं परमात्मानं सृष्टिं स्रष्टारमव्ययम्
सर्वसंसारहर्त्तारं विभर्त्तारं भजाम्यहम् ॥

## अथ णिजन्तप्रकरणम्।

भू—सत्तायाम्। भवतीति-भवन् भवन्तं प्रेरयति—भावयति (हुवाता है) भावयतः भावयन्ति। भावयसि भावयथः भावयथ भावयामि भावयावः भावयामः। भावयते भावयेते भावयन्ते। भावयसे भावयेथे भावयध्वे। भावये भावयावहे भावयामहे। लिट्—भावयाञ्चकार भावयाञ्चक्रतुः भावयाञ्चक्रुः भावयाञ्चकर्थ भावयाञ्चक्रथुः भावयाञ्चक्र। भावयाञ्चकार, भावयाञ्चकर भावयाञ्चकृव भावयाञ्चकृम। भावयाम्बभूव भावयाम्बभूवतुः भावयाम्बभूवुः भावयाम्बभूविथ भावयाम्बभूवथुः भावयाम्बभूव भावयाम्बभूव भावयाम्बभूविव भावयाम्बभूविम। भावयामास भावयामासतुः भावयामासुः। भावयामासिथ भावयामासथुः भावयामास। भावयामास भावयामासिव भावयामासिम। भावयाञ्चक्रे इत्यादि। लुट्—भावयिता भावयितारौ भावयितारः। भावयितासि। भावयितास्थः भावयितास्थ। भावयितास्मि भावयितास्वः भावयितास्मः। भावयिता भावयितारौ भावयितारः। भावयितासे भावयितासाथे भावयिताध्वे। भावयिताहे भावयितास्वहे भावयितास्महे। लृट्—भावयिष्यति भावयिष्यतः भावयिष्यन्ति भावयिष्यसि भावयिष्यथः भावयिष्यथ। भावयिष्यामि भावयिष्यावः भावयिष्यामः। भावयिष्यते भावयिष्येते

भावयिष्यन्ते । भावयिष्यसे भावयिष्येथे भावयिष्यध्वे । भावयिष्ये भावयिष्यावहे भावयिष्यामहे। लोट्—भावयतु, भावयतात् भावयताम् भावयन्तु । भावय, भावयतात् भावयतम् भावयत । भावयानि भावयाव भावयाम । भावयताम् भावयेताम् भावयन्ताम्। भावयस्व भावयेथाम् भावयध्वम्।भावयै भावयावहै भावयामहै। लङ्—अभावयत् अभावयताम् अभावयन् । अभावयः अभावयतम् अभावयत । अभावयम् अभावयाव अभावयाम । अभावयत अभावयेताम् अभावयन्त । अभावयथाः अभावयेथाम् अभावयध्वम् । अभावये अभावयावहि अभावयामहि । विधिलिङ्—भावयेत् भावयेताम् भावयेयुः। भावयेः भावयेतम् भावयेत भावयेयम् भावयेव भावयेम । भावयेत भावयेयाताम् भावयेरन् भावयेथाः भावयेयाथाम् भावयेध्वम् । भावयेय भावयेवहि भावयेमहि । आशीर्लिङ्—भाव्यात् भाव्यास्ताम् भाव्यासुः । भाव्याः भाव्यास्तम् भाव्यास्त । भाव्यासम् भाव्यास्व भाव्यास्म । भावयिषीष्ट भावयिषीयास्ताम् भावयिषीरन् भावयिषीष्ठाः भावयिषीयास्थाम् भावयिषीध्वम् भावयिषीय भावयिषीवहि भावयिषीमहि । लुङ्—अबीभवत् अबीभवताम् अबीभवन् । अबीभवः अबीभवतम् अबीभवत । अबीभवम् अबीभवाव अबीभवाम । अबीभवत अबीभवेताम् अबीभवन्त अबीभवथाः अबीभवेथाम् अबीभवध्वम् अबीभवे अबीभवावहि अबीभवामहि । लृङ्—अभावयिष्यत् अभावयिष्यताम् अभावयिष्यन् । अभावयिष्यः अभावयिष्यतम् अभावयिष्यत । अभावयिष्यम् अभावयिष्याव अभावयिष्याम । अभावयिष्यत अभावयिष्येताम् अभावयिष्यन्त । अभावयिष्यथाः अभावयिष्येथाम् अभावयिष्यध्वम् । अभावयिष्ये अभावयिष्यावहि अभावयिष्यामहि ।

पूञ्—पवने । लट्—पावयति ( पवित्र कराता है ) पावयतः पावयन्ति । पावयसि पावयथः पावयथ । पावयामि पावयावः

पावयामः। पावयते पावयेते पावयन्ते पावयसे पावयेथे पाव-यध्वे । पावये पावयावहे पावयामहे । लिट्—पावयाञ्चकार पावयाञ्चक्रतुः पावयाञ्चक्रुः पावयाञ्चकर्थ पावयाञ्चक्रथुः पावयाञ्चक्र। पावयाञ्चकार, पावयाञ्चकर पावयाञ्चकृव पाव-याञ्चकृम । एवम् पावयाम्बभूव, पावयामास । पावयाञ्चक्रे पावयाञ्चक्राते पावयाञ्चक्रिरे इत्यादि । लुट्—पावयिता पाव-यितारौ पावयितारः पावयितासि पावयितास्थः पावयितास्थ पावयितास्मि पावयितास्वः पावयितास्मः । पावयिता पावयि-तारौ पावयितारः पावयितासे पावयितासाथे पावयिताध्वे । पावयिताहे पावयितास्वहे पावयितास्महे । लृट्—पावयिष्यति पावयिष्यतः पावयिष्यन्ति । पावयिष्यसि पावयिष्यथः पावयिष्यथ । पावयिष्यामि पावयिष्यावः पावयिष्यामः। पावयिष्यते पावयिष्येते पावयिष्यन्ते पावयिष्यसे पावयिष्येथे पावयिष्यध्वे। पावयिष्ये पावयिष्यावहे पावयिष्यामहे । लोट्-पावयतु, पावयतात् पावयताम् पावयन्तु । पाव र, पावयतात् पावयतम् पावयत । पावयानि पावयाव पावयाम। पावयताम् पावयेताम् पावयन्ताम् । पावयस्व पावयेथाम् पावयध्वम् । पावयै पावयावहै पावयामहै । लङ्—अपावयत् अपावयताम् अपावयन्। अपावयः अपावयतम् अपावयत । अपावयम् अपा-वयाव अपावयाम । अपावयत अपावयेताम् अपावयन्त अपा-वयथाः अपावयेथाम् अपावयध्वम् अपावये अपावयावहि अपावयामहि । विधिलिङ्—पावयेत् पावयेताम् पावयेयुः। पावयेः पावयेतम् पावयेत पावयेयम् पावयेव पावयेम। पावयेत पावयेयाताम् पावयेरन् । पावयेथाः पावयेयाथाम् पावयेध्वम्। पावयेय पावयेवहि पावयेमहि । आशीर्लिङ्—पाव्यात् पाव्यास्ताम् पाव्यासुः। पाव्याः पाव्यास्तम् पाव्यास्त । पाव्यासम् पाव्यास्व पाव्यास्म । पावयिषीष्ट पावयिषीयास्ताम्

पावयिषीरन् । पावयिषीष्ठाः पावयिषीयास्थाम् पावयिषीध्वम् पावयिषीय पावयिषीवहि पावयिषीमहि । लुङ्—अपीपवत् अपीपवताम् अपीपवन् । अपीपवः अपीपवतम् अपीपवत । अपीपवम् अपीपवाव अपीपवाम । अपीपवत अपीपवेताम् अपीपवन्त । अपीपवथाः अपीपवेथाम् अपीपवध्वम् । अपीपवे अपीपवावहि अपीपवामहि । लृङ्—अपावयिष्यत्, अपावयिष्यत इत्यादि ।

ष्ठा–गतिनिवृत्तौ । लट्–स्थापयति (ठहराता है) स्थापयतः स्थापयन्ति । स्थापयसि स्थापयथः स्थापयथ । स्थापयामि स्थापयावः स्थापयामः । स्थापयते स्थापयेते स्थापयन्ते स्थापयसे स्थापयेथे स्थापयध्वे । स्थापये स्थापयावहे स्थापयामहे । लिट्—स्थापयाञ्चकार, स्थापयाम्बभूव, स्थापयामास । स्थापयाञ्चक्रे इत्यादि । लुट्—स्थापयिता स्थापयितारौ स्थापयितारः । स्थापयितासि स्थापयितास्थः स्थापयितास्थ स्थापयितास्मि स्थापयितास्वः स्थापयितास्मः । स्थापयिता स्थापयितारौ स्थापयितारः । स्थापयितासे स्थापयितासाथे स्थापयिताध्वे । स्थापयिताहे स्थापयितास्वहे स्थापयितास्महे । लृट्–स्थापयिष्यति स्थापयिष्यतः स्थापयिष्यन्ति । स्थापयिष्यसि स्थापयिष्यथः स्थापयिष्यथ स्थापयिष्यामि स्थापयिष्यावः स्थापयिष्यामः । स्थापयिष्यते स्थापयिष्येते स्थापयिष्यन्ते स्थापयिष्यसे स्थापयिष्येथे स्थापयिष्यध्वे स्थापयिष्ये स्थापयिष्यावहे स्थापयिष्यामहे । लोट्—स्थापयतु स्थापयतात्, स्थापयताम् स्थापयन्तु । स्थापय, स्थापयतात् स्थापयतम् स्थापयत स्थापयानि स्थापयाव स्थापयाम । स्थापयताम् स्थापयेताम् स्थापयन्ताम् । स्थापयस्व स्थापयेथाम् स्थापयध्वम् । स्थापयै स्थापयावहै स्थापयामहै । लङ्—अस्थापयत् अस्थापयताम् अस्थापयन् । अस्थापय

अस्थापयतम् अस्थापयत । अस्थापयम् अस्थापयाव अस्थापयाम । अस्थापयत अस्थापयेताम् अस्थापयन्त । अस्थापयथाः अस्थापयेथाम् अस्थापयध्वम् । अस्थापये अस्थापयावहि अस्थापयामहि । विधिलिङ्—स्थापयेत् स्थापयेताम् स्थापयेयुः स्थापयेः स्थापयेतम् स्थापयेत । स्थापयेयम् स्थापयेव स्थापयेम । स्थापयेत स्थापयेयाताम् स्थापयेरन् । स्थापयेथाः स्थापयेयाथाम् स्थापयेध्वम् । स्थापयेय । स्थापयेवहि स्थापयेमहि आशीर्लिङ्—स्थाप्यात् स्थाप्यास्ताम् स्थाप्यासुः । स्थाप्याः स्थाप्यास्तम् स्थाप्यास्त । स्थाप्यासम् स्थाप्यास्व स्थाप्यास्म । स्थापयिषीष्ट स्थापयिषीयास्ताम् स्थापयिषीरन् । स्थापयिषीष्ठाः स्थापयिषीयास्थाम् स्थापयिषीध्वम् । स्थापयिषीय स्थापयिषीवहि स्थापयिषीमहि । लुङ्—अतिष्ठिपत् अतिष्ठिपताम् अतिष्ठिपन् । अतिष्ठिपः अतिष्ठिपतम् अतिष्ठिपत अतिष्ठिपम् अतिष्ठिपाव अतिष्ठिपाम । अतिष्ठिपत अतिष्ठिपेताम् अतिष्ठिपन्त । अतिष्ठिपथाः अतिष्ठिपेथाम् अतिष्ठिपध्वम् । अतिष्ठिपे अतिष्ठिपावहि अतिष्ठिपामहि । लृङ्—अस्थापयिष्यत्, अस्थापयिष्यत इत्यादि ।

इङ्—अध्ययने । अध्यापयति (पढ़ाता है) अध्यापयतः अध्यापयन्ति अध्यापयसि अध्यापयथः अध्यापयथ । अध्यापयामि अध्यापयावः अध्यापयामः । लिट्—अध्यापयाञ्चकार, अध्यापयाम्बभूव, अध्यापयामास इत्यादि । लुट्—अध्यापयिता अध्यापयितारौ अध्यापयितारः । अध्यापयितासि अध्यापयितास्थः अध्यापयितास्थ । अध्यापयितास्मि अध्यापयितास्वः अध्यापयितास्मः । लृट्—अध्यापयिष्यति अध्यापयिष्यतः अध्यापयिष्यन्ति । अध्यापयिष्यसि अध्यापयिष्यथः अध्यापयिष्यथ । अध्यापयिष्यामि अध्यापयिष्यावः अध्यापयिष्यामः । लोट्—अध्यापयतु, अध्यापयतात् अध्यापयताम् अध्यापयन्तु । अध्यापय, अध्यापयतात् अध्याप-

यतम् अध्यापयत । अध्यापयानि अध्यापयाव अध्यापयाम । लङ्—अध्यापयत् अध्यापयताम् अध्यापयन् । अध्यापयः अध्यापयतम् अध्यापयत । अध्यापयम् अध्यापयाव अध्यापयाम । विधिलिङ्—अध्यापयेत् अध्यापयेताम् अध्यापयेयुः । अध्यापयेः अध्यापयेतम् अध्यापयेत । अध्यापयेयम् अध्यापयेव अध्यापयेम । आशीर्लिङ्—अध्याप्यात् अध्याप्यास्ताम् अध्याप्यासुः । अध्याप्याः अध्याप्यास्तम् अध्याप्यास्त । अध्याप्यासम् अध्याप्यास्व अध्याप्यास्म । लुङ्—अध्यजीगपत् अध्यजीगपताम् अध्यजीगपन् । अध्यजीगपः अध्यजीगपतम् अध्यजीगपत । अध्यजीगपम् अध्यजीगपाव अध्यजीगपाम । अध्यापिपत् अध्यापिपताम् अध्यापिपन् । अध्यापिपः अध्यापिपतम् अध्यापिपत । अध्यापिपम् अध्यापिपाव अध्यापिपाम । लृङ्—अध्यापयिष्यत् इत्यादि ।

घट—चेष्टायाम् । घटमानं प्रयोजयति—घटयति घटयते । घटयाञ्चकार, घटयाम्बभूव, घटयामास । घटयाञ्चक्रे इत्यादि । घटयिता । घटयिष्यति, घटयिष्यते । घटयतु, घटयताम् । अघटयत्, अघटयत । घटयेत्, घटयेत । घट्यात्, घटयिषीष्ट । अजीघटत्, अजीघटत । अघटयिष्यत्, अघटयिष्यत ।

ज्ञप्—ज्ञापने । ज्ञपयति, ज्ञपयते । ज्ञपयाञ्चकार, ज्ञपयाञ्चक्रे । ज्ञपयिता । ज्ञपयिष्यति । ज्ञपयतु । अज्ञपयत् । ज्ञपयेत् । ज्ञप्यात् अजीज्ञपत् । अज्ञपयिष्यत् । जागृ—निद्राक्षये । जागरयति । शीङ्—स्वप्ने—शाययति । माङ्—माने—मापयति । तनु विस्तारे—तानयति । डुक्रीञ्—द्रव्यविनिमये—क्रापयति । पा—पाने—पाययति । डुदाञ् दाने—दापयति । ऋ—गतौ—अर्पयति ।

माता शाययति स्वकीयतनयं कोलाहलं मा कृथाः । अध्यापकोऽध्यापयति नरेन्द्रम् । धर्म्मं धारयति स्वधर्मनिरतः भूपालचूडामणिः । मनः पावयति गुरुः । तानयन्ति वितानं ते सोमदे-

घस्य मन्दिरे। ते क्षापयन्ति प्रथमं वसनानि हट्टे। ते पाययन्ति प्रथमं मह्यं जलं न। यूयं न दापयथ दापयति मुरारिः।

निशान्तम् = गृह, घर। वालेयः, चक्रीवान् = गदहा। दयालुः = दयावान्। निद्रालुः = सोने वाला। घस्मरः = खाने घाला। परिक्षेपकः = फेंकने वाला। परिवादकः = निन्दा करने वाला। व्याभाषकः = हँसी करने वाला। चङ्क्रमणः = इधर-उधर घूमने वाला। गर्धनः = लोभी। क्रोधनः = गुस्सेबाज़। जल्पाकः = बकवादी। इत्वरः = पथिक। जागरूकः = चतुर। नम्रः = नमनशील। यायावरः = बहुत विचरनेवाला। दुर्मुखः = अप्रियवादी। वागीशः = अच्छा बोलने वाला। प्रियंवदः = प्यारा बोलने वाला। अज्ञः = जड़, महामूढ़। तूष्णीकः = चुप रहने वाला। कीनासः = नीच। धिक्कृतः = भिड़का हुआ।

छात्रविचारान् शुद्धान् भावयति गुरुः। अहं त्वां दयालुं भावयिष्यामि। नृपः पावयति प्रजाः अहं त्वां पावयिष्यामि सोमदत्तं प्रियंवदम्। शकटं स्थापयिष्यामि प्रयामि मथुरां प्रति। अध्यापयामि शास्त्रं निपुणं विचार्य। अध्यापिपद् गाधिसुतः क्षितीन्द्रम्। घटयति धर्मकार्येषु सर्वदा मम शिक्षकः। दाता न दापयति दापयिता न दत्ते। कार्यं न कारयति हासयति महेन्द्रः। श्रीमानयं पालयति प्रजा नृपः। छात्रो न देवयति खेलयति नरेन्द्रः। चौरश्चोरयति मदीयद्रविणं त्रायस्व शीघ्रं सखे! भारं नाययति त्वदीयभृत्यश्चक्रीवत्ता दृश्यताम्। पाठं पाठयति श्रमेण महता श्रीमान् चूडामणिः।

## अथ सन्नन्तप्रकरणम्।

पठितुमिच्छति पिपठिषति (पढ़ना चाहता है) पिपठिषतः पिपठिषन्ति पिपठिषसि पिपठिषथः पिपठिषथ। पिपठिषामि पिपठिषावः पिपठिषामः। लिट्—पिपठिषाञ्चकार पिपठिषाञ्चक्रतुः

वाञ्छामि क्षीरम् । दित्सामि दानं कराभ्यां सदाहम् । श्वानं जिघांसति कथं विपरीतबुद्धे । तुभ्यं दुग्धं पिपक्षामि । कुलालः घटं सिसृक्षति । चिकोपामि न भोजनम् । निनीषामि भारं महेन्द्रस्य नाहम् । चुचोरयिषन्ति फलानि बालकाः । पिपासामि दुग्धं जिगमिषामि शालाम् । वृद्धो न शिशयिषते । जिजागरिषन्ति न बालका इमे । बुभुत्सामि शास्त्रं पुरा गोतमीयम् । यूयं चिकीर्षथ वस्त्रं चिकीर्षेऽहं फलामि च ।

## यङन्तप्रकरणम् ।

पुनः पुनरतिशयेन वा भवतीति–बोभूयते बोभूयेते बोभूयन्ते इत्यादि । बोभूयाञ्चक्रे, बोभूयाम्बभूव, बोभूयामास । बोभूयिता । बोभूयिष्यते । बोभूयताम् । अबोभूयत । बोभूयेत । बोभूयिषीष्ट । अबोभूयिष्ट अबोभूयिष्यत । कुटिलं व्रजतीति वाव्रज्यते । वाव्रजाञ्चक्रे वाव्रजाम्बभूव, वाव्रजामास । वाव्रजिता । वाव्रजिष्यते । वाव्रज्यताम् । अवाव्रज्यत । वाव्रज्येत । वाव्रजिषीष्ट । अवाव्रजिष्ट । अवाव्रजिष्यत । पुनः पुनरतिशयेन वा करोतीति–चेक्रीयते । चेक्रीयाञ्चक्रे चेक्रीयिता । चेक्रीयिष्यते । चेक्रीयताम् । अचेक्रीयत । चेक्रीयेत । चेक्रीयिषीष्ट । अचेक्रीयिष्ट । अचेक्रीयिष्यत । पुनः पुनरतिशयेन वा वर्त्तते वरीवृत्यते । वरीवृताञ्चक्रे । वरीवृतिता । वरीवृतिष्यते । वरीवृत्यताम् । अवरीवृत्यत । वरीवृत्येत । वरीवृतिषीष्ट । अवरीवृतिष्ट । अवरीवृतिष्यत । पुनः पुनरतिशयेन वा नृत्यतीति–नरीनृत्यते । नरीनृताञ्चक्रे । नरीनृतिता । नरीनृतिष्यते । नरीनृत्यताम् । अनरीनृत्यत । नरीनृत्येत । नरीनृतिषीष्ट । अनरीनृतिष्ट । अनरीनृतिष्यत । पुनः पुनरतिशयेन वा गृह्णातीति–जरीगृह्यते । जरीगृहाञ्चक्रे । जरीगृहिता । जरीगृहिष्यते । जरीगृह्यताम् । अजरीगृह्यत । जरीगृहीत । जरीगृहिषीष्ट । अजरीगृहिष्ट । अजरीगृहिष्यत । एवमेव

अतिशयेन हन्ति—जङ्घन्यते । अतिशयते जुहोति जोहूयते । अतिशयेन भृशं वा दीव्यति देदीव्यते । अतिशयेन पुनः पुनर्वा सुनोति—सोषूयते । पुनः पुनरतिशयेन वा तुदति—तोतुद्यते । रोरुध्यते । तन्तन्यते । चेक्रीयते । देदीयते । चोचूर्यते । मेमीयते । अतिशयेन जायते—जाजायते, जञ्जन्यते । अतिशयेन पुनः पुनर्वा सृजति सरीसृज्यते । पुनः पुनरतिशयेन वा मिलति मिलते—मेमिल्यते । पुनः पुनरतिशयेन वा—चोरयति चोचूयते । अतिशयेन पुनः पुनः—पृच्छति परीपृच्छ्यते ।

बोभूयते सम्प्रति मेघनादः । वाव्रज्यते हलधरोमथुरां गजेन-चेक्रीयते सत्यव्रतो न पाठम् । धेनूर्जङ्घन्यते देशे, कथं भव्यं भविष्यति । देदीयते गुरुकुलाय धनं कथं न । पेपीयते काव्यरसं कवीन्द्रः । नेनीयते मम फलानि कथं सुशीलः । कोकूयते पक्षि-गणः प्रभाते । जोहूयते रणजिद् यौवनश्रियम् । नन्नम्येऽहं परम-पूज्यं मान्यमान्यं महेच्छम् । मातर्भारतभूमिसर्वसुखदे ! दृष्ट्वा त्वदीयां दशाम्, रोगार्तै सुतरां धनादिरहिते ! शोकोहि जा-जायते । देवोऽयं जगदीश्वरः सुरसुरः सृष्टिं सरीसृज्यते । नैत-त्साधु विधानमत्र सुमते ! प्रश्नं परीपृच्छ्यते । चोचूर्यते तव धनं निधनाः कथं न ।

## यङ्लुगन्तप्रकरणम् ।

अतिशयेन भवतीति—बोभवीति बोभोति, बोभूतः बोभुवति । बोभवीषि—बोभोषि, बोभूथः बोभूथ । बोभवीमि—बोभोमि, बोभूवः बोभूमः । लिट्—बोभवाञ्चकार, बोभवाम्बभूव, बोभवा-मास इत्यादि । लुट्—बोभविता । लृट्—बोभविष्यति । लोट्—बोभवीतु, बोभोतु, बोभूतात् बोभूताम् बोभुवन्तु । बोभूहि, बोभूतात्, बोभूतम् बोभूत । बोभवानि बोभवाव बोभवाम । लङ्—अबोभवीत्, अबोभोत् अबोभूताम् अबोभवुः । अबोभवीः,

अबोभोः अबोभूतम् अबोभूत अबोभवम् अबोभूव अबोभूम। विधिलिङ्—बोभूयात् बोभूयाताम् बोभूयुः। बोभूयाः बोभूयातम् बोभूयात। बोभूयाम् बोभूयाव बोभूयाम। आशीर्लिङ्—बोभूयात् बोभूयास्ताम् बोभूयासुः। बोभूयाः बोभूयास्तम् बोभूयास्त। बोभूयासम् बोभूयास्व बोभूयास्म। लुङ्—अबोभवीत् अबोभोत् अबोभूताम् अबोभुवन्। अबोभवीः अबोभोः अबोभूतम् अबोभूत। अबोभुवम् अबोभूव अबोभूम। लृङ्—अबोभविष्यत्। अतिशयेन गच्छति—जङ्गमिति जङ्गन्ति जङ्गतः जङ्गमति। जङ्गमीषि जङ्गसि, जङ्गथः जङ्गथ। जङ्गमीमि जङ्गन्मि, जङ्गन्वः जङ्गन्मः॥लिट्—जङ्गमाञ्चकार। जङ्गमिता। जङ्गमिष्यति। जङ्गमीतु जङ्गन्तु, जङ्गतात्, जङ्गताम् जङ्गमतु। जङ्गहि, जङ्गतात् जङ्गतम् जङ्गत। जङ्गमानि जङ्गमाव जङ्गमाम। अजङ्गमीत् अजङ्गन् अजङ्गताम्। अजङ्गमन्। अजङ्गमीः, अजङ्गन् अजङ्गतम् अजङ्गत। अजङ्गमम् अजङ्गन्व अजङ्गन्म। जङ्गम्यात्। अजङ्गमीत् अजङ्गमिषताम् अजङ्गमिषुः। अजङ्गमिष्यत्। एवम् अतिशयेन हन्ति जङ्घनीति, जङ्घन्ति जङ्घ्नन्ति इत्यादि। अतिशयेन नुवति नोनवीति नोनोति। अतिशयेन जहाति जाहेति जाहाति जाहीतः जाहति। अतिशयेन—करोति चर्कर्त्ति चरिकर्त्ति चरीकर्त्ति चर्कृति चर्करीति चरीकरीति चर्कृतः चर्क्रति। अतिशयेन—वर्त्तते वर्वर्त्ति—वरिवर्त्ति वरीवर्त्ति वर्वृतीति वरीवृतीति वरीवृतीति। पुनः पुनः पृच्छति पाप्रच्छीति पाप्रष्टि, पाप्रष्टः पाप्रच्छति। पुनः पुनः कूर्दते—चोकूर्दीति चोकूर्त्ति।

## उदाहरणानि।

बोभोति पीडा जठरे मदीये। जङ्गन्ति यमुना मथुरामितो-भवन्! जङ्घन्ति यो गा नरकं प्रयाति। नोनोमि देव! बलदेव! ददातु शक्तिम्। चर्कर्त्ति सृष्टिं परमेश्वरो विभुः। वर्वर्त्ति भव्यं

भवदानुकम्पया। पापृष्टि प्रश्नं मैत्रोहि गोतमम् । चोकूर्द्दति समे बालाः सोमदत्तं च मां विना। नरीनर्त्ति देत्रे मयूरोमदीये। जरीहर्त्ति वस्तूनि चौरः समानि । वरीभर्त्ति तुण्डं गणेशः स्वकीयम्।

## अथ नामधातुप्रकरणम्।

आत्मनः पुत्रमिच्छति—पुत्रीयति (पुत्र को चाहता है) पुत्रीयतः पुत्रीयन्ति। पुत्रीयसि पुत्रीयथः पुत्रीयथ। पुत्रीयामि पुत्रीयावः पुत्रीयामः। लिट्–पुत्रीयाञ्चकार। पुत्रीयाम्बभूव । पुत्रीयामास। पुत्रीयिता। पुत्रीयिष्यति। पुत्रीयतु। अपुत्रीयत्। पुत्रीयेत्। पुत्रीय्यात्। अपुत्रीयीत्। अपुत्रीयिष्यत्। आत्मनोराजानमिच्छति— राजीयति। राजीयाञ्चकार। राजीयिता राजीयिष्यति। राजीयतु। अराजीयत्। राजीयेत्। राजीय्यात्। अराजीयीत्। अराजीयिष्यत्। समिधमिच्छति—समिध्यति। समिधाञ्चकार, समिध्याञ्चकार, समिधाम्बभूव, समिध्याम्बभूव। समिधामास, समिध्यामास । समिधिता, समिध्यिता। समिधिष्यति, समिध्यिष्यति । समिध्यतु । असमिध्यत्। समिध्येत्। समिध्यात्। समिध्य्यात्। असमिधीत्, असमिध्यीत्। असमिधिष्यत्, असमिध्यिष्यत्। पुत्रमात्मन इच्छति-पुत्रकाम्यति। पुत्रकाम्याञ्चकार। पुत्रकाम्याम्बभूव। पुत्रकाम्यामास। पुत्रकाम्यिता। पुत्रकाम्यिष्यति। पुत्रकाम्यतु। अपुत्रकाम्यत्। पुत्रकाम्येत्। पुत्रकाम्यात्। अपुत्रकाम्यीत्। अपुत्रकाम्यिष्यत्। पुत्रमिवाचरति–पुत्रीयति–छात्रम् पुत्रीयति। पुत्रीयाञ्चकार इत्यादि। मित्रमिवाचरति—मित्रीयति–शत्रुम्। आत्मनः कविमिच्छति–कवीयति। आत्मनः शत्रुमिच्छति–शत्रूयति मित्रम् इत्यादि। अन्ध इवाचरति–अन्धति। अन्धाञ्चकार। स्व इवाचरति-स्वति। सस्वौ। इदमिवाचरति–इदामति। इदा-

माञ्चकार राजेवाचरति—राजानति। राजानाञ्चकार। राजानिता। राजानिष्यति इत्यादि। पन्था इवाचरति—पथीनति। कष्टाय क्रमते—कष्टायते पापं कर्त्तुमुत्सहते इत्यर्थः। कष्टायाञ्चकार। कष्टायिता। कष्टायिष्यति इत्यादि। शब्दं करोति—शब्दायते शब्दायेते शब्दायन्ते। वैरायते। कलहायते। अभ्रायते। कण्वायते। मेघायते। सुखं वेदयते—सुखायते। दुःखं वेदयते-दुःखायते। नमः करोति—नमस्यति। घटं करोत्याचष्टे वा घटयति। घटयाञ्चकार। घटयिता। घटयिष्यति इत्यादि।

## उदाहरणानि।

पुत्रीयति प्रभुवरः शिवराजभूपः। राजीयति सम्प्रति सोमदेवः। कवीयामि यामि प्रयागं पवित्रम्। कथमन्धति भो वटो! राजानति कलभो हि स्वयूथमध्ये। कष्टायते सम्प्रति चन्द्रदत्तः। मूर्खो हि कलहायते। सत्यव्रतः सुखायते। दुःखायते च लम्पटः॥ नमस्यामि देवं परेशम् महेशम्। लङ्केशोऽयं खलायते। बालो-वृद्धायते कलौ। सोमरामौ कवीयतः। शब्दायते शकटचक्रमिदं कथं भोः!। वैरायते धनपतिः कुमतिर्महेन्द्रः। खलो हि कलहायते। सुखायन्ते जगति ज्ञानधियो मनुष्याः। दुःखायते मूढमतिर्मनुष्यः। धर्म्मनाथो गजायते। रघुवीरो महिषायते।

## अथ कण्ड्वादि—प्रकरणम्।

कण्डूञ्—गात्रविघर्षणे = खुजलाना। कण्डूयति, कण्डूयते। कण्डूयाञ्चकार, कण्डूयाम्बभूव, कण्डूयामास, कण्डूयाञ्चक्रे। कण्डूयिता, कण्डूयितासे। कण्डूयिष्यति, कण्डूयिष्यते। कण्डूयतु, कण्डूयताम्। अकण्डूयत्। अकण्डूयत। कण्डूयेत्, कण्डूयेत। कण्डूय्यात्, कण्डूयिषीष्ट। अकण्डूयीत्, अकण्डूयिष्ट। अकण्डूयिष्यत्, अकण्डूयिष्यत। महीङ्—पूजायाम्। महीयते। महीयाञ्चक्रे। महीयिता। महीयिष्यते।

महीयताम् । अमहीयत । महीयेत । महीयिषीष्ट । अमहीयिष्ट । अमहीयिष्यत ।

कण्डूयति तत्र महेन्द्रमहिपः । प्रतापः कौ महीयते ।

---

प्रेक्षा = बुद्धि । भ्रान्तिः = भ्रम, उलटी समझ । अभ्युपगमः = स्वीकार । अपवर्गः = मोक्ष, वहिश्त । अहम्मतिः = अज्ञान, बेवकूफी । सुरभिः = अच्छागन्ध, खुशबू । आम्नायः = वेद । समाहृतिः = संग्रह । हूतिः = आह्वान, बुलाना । अनुयोगः = प्रश्न, सवाल । परीवादः = निन्दा । सूनृतम् = प्रियसत्यवचन । वितथम् = मिथ्या । ऋतम् = सत्य, सच । रवः = शब्द, आवाज़ । बल्लभम् = प्रिय । मलीमसम् = खोटा, नीच । मेध्यम् = पवित्र, साफ़ । शून्यम् = खाली । प्रमुखः = प्रधान । अहोपुरुषिका = गर्व से अपनी शक्ति दिखलाना । अहमहमिका = आपस में अहङ्कार । समीकम् = युद्ध । मातामहवासः = ननसाल ।

## आत्मनेपदप्रकरणम् ।

भावे-आस्यते भवता । आस्यते भवद्भ्याम् । आस्यते भवद्भिः शय्यते त्वया । शय्यते युवाभ्याम् । शय्यते युष्माभिः । मया भूयते । आवाभ्यां भूयते । अस्माभिर्भूयते । मया शय्यते । तेन शय्यते । त्वया शय्यते । आवाभ्यां शय्यते । अस्माभिः शय्यते इत्यादि ।

कर्मणि—क्रियते कटः । क्रियेते कटौ । क्रियन्ते कटाः एवमेव भारो ह्रियते धृतिर्ध्रियते । कर्मव्यतिहारे व्यति लुनते । व्यति पुनते व्यति गच्छन्ति । व्यति घ्नन्ति । अत्र न गतिहिंसार्थेभ्य इति निषेधः

निविशते ( घुसता है ) निविशेते निविशन्ते । निविशसे निविशेथे निविशध्वे । निविशे निविशावहे । निविशामहे । निविविशे निविविशाते । निविविशिरे । निविविशिषे निविविशाथे निविविशिध्वे । निविविशे निविविशिवहे निविविशिमहे । निवेष्टा ।

निवेदयते । निविशताम् । न्यविशत । निविशेत । निविक्षीष्ट । न्यविक्षत । न्यवेक्ष्यत ।

परिक्रीणीते ( मोल लेता है ) परिक्रीणाते परिक्रीणते । परीक्रीणीषे परीक्रीणाथे परिक्रीणीध्वे । परीक्रीणे परिक्रीणीवहे परिक्रीणीमहे । परिचिक्रिये परिचिक्रियाते परिचिक्रियिरे परिचिक्रीयिषे परिचिक्रियाथे परिचिक्रियिध्वे । परिचिक्रिये परिचिक्रियिवहे परिचिक्रियिमहे । परिक्रेता । परिक्रेष्यते । परिक्रीणीताम् । पर्यक्रीणीत परिक्रीणीत परिक्रेषीष्ट । पर्यक्रेष्ट । पर्यक्रेष्यत एवमेव विक्रीणीते, ( बेचता है ) अवक्रीणीते ( खरीदता है ) इत्यादि ।

विजयते ( जीतता है ) विजिग्ये । विजेता । विजेष्यते । विजयताम् । व्यजयत । विजयेत । विजेषीष्ट । व्यजेष्ट । व्यजेष्यत एवं पराजयते पराजयेते पराजयन्ते इत्यादि । सन्तिष्ठते ( ठहरता है ) संतस्थे । संस्थाता । संस्थास्यते । संतिष्ठताम् । समतिष्ठत । संतिष्ठेत संस्थासीष्ट । समस्थित । समस्थास्यत । एवमेव अवतिष्ठते । प्रतिष्ठते । ( सत्कार को प्राप्त होता है ) इत्यादि । वितिष्ठते ( विचलता है ) शतमपजानीते अपलपतीत्यर्थः । अपजानाते अपजानते अपजानीषे अपजानाथे अपजानीध्वे अपजाने अपजानीवहे अपजानीमहे । अपजज्ञे । अपज्ञाता । अपज्ञास्यते । अपजानीताम् । अपाजानीत, अपजानीत । अपज्ञासीष्ट । अपाज्ञास्यत । उच्चरते = उल्लङ्घन करता है । उच्चरेते उच्चरन्ते । उच्चेरे उच्चेराते उच्चेरिरे । उच्चरिता । उच्चरिष्यते । उच्चरताम् । उदचरत । उच्चरेत । उच्चरिषीष्ट । उदचरिष्ट । उदचरिष्यत । एदिधिषते = वह बढ़ना चाहता है । एदिधिषाञ्चक्रे । एदिधिषिता । एदिधिषिष्यते । एदिधिषताम् । ऐदिधिषत । एदिधिषेत । एदिधिषिषीष्ट । ऐदिधिषिष्ट । ऐदिधिषिष्यत ।

निविविक्षते = वह घुसना चाहता है । निविविक्षाञ्चक्रे ।

निविविक्षिता । निविविक्षिष्यते । निविविक्षिताम् न्यविविक्षित न्यविविक्षिष्ट न्यविविक्षिष्यत ।

गन्धनम्—सूचनम् । उत्कुरुते—सूचयतीत्यर्थः । अवक्षेपणम्—भर्त्सनम् । श्येनोवर्त्तिकामुत्कुरुते—भर्त्संयतीत्यर्थः । स्वामिनमुपकुरुते—सेवत इत्यर्थः । परधनानि प्रकुरुते—परधनेषु सहसाप्रवर्त्तत इत्यर्थः ।

एधोदकस्योपस्कुरुते—तद्गुणमाधत्ते । कथाः प्रकुरुते-कथयतीत्यर्थः शतं प्रकुरुते-धर्मार्थं विनियुङ्क्ते । मोदकान् भुङ्क्ते भुञ्जाते भुञ्जते । भुंक्षे भुञ्जाथे भुङ्ग्ध्वे । भुञ्जे भुञ्ज्वहे भुञ्ज्महे । बुभुजे बुभुजाते बुभुजिरे । बुभुजिषे बुभुजाथे बुभुजिध्वे । बुभुजे बुभुजिवहे बुभुजिमहे । भोक्ता । भोक्ष्यते । भुङ्क्ताम् । अभुङ्क्त । भुञ्जीत । भुक्षीष्ट । अभुक्त । अभोक्ष्यत ।

सत्तमः = श्रेष्ठ, उम्दा । उपसर्जनम् = अप्रधान, मामूली । पृथुलम् = बड़ा । स्तोकम् = थोड़ा । प्रभूतम् = बहुत । कृत्स्नम् = सम्पूर्ण । सान्द्रम् = सघन । आसन्नम् = निकट । दिनान्तः = सायम्, शाम । प्राह्णः = दिनका प्रथम भाग । मध्याह्नः—दुपहर । अपराह्णः = दुपहर पीछे । क्षणदा = रात्रि, रात । तमिस्रा = अन्धेरी रात । ज्योत्स्ना = चाँदनी रात । प्रदोषः = रात्रिका पूर्व भाग । निशीथः = आधीरात । यामः = प्रहर, पहर, तीन घण्टे का समय । वृजिनम् = पाप । आमोदः = हर्ष, खुशी । बीजम् = कारण, सबब । राद्धान्तः—सिद्धान्त । निदानम् = आदिकारण ।

## अथ परस्मैपदप्रकरणम् ।

डुकृञ्—करणे । अनुकरोति ( नक़ल करता है ) अनुकुरुतः अनुकुर्वन्ति । अनुकरोषि अनुकुरुथः अनुकुरुथ । अनुकरोमि अनुकुर्वः अनुकुर्मः । अनुचकार । अनुकर्ता । अनुकरिष्यति । अनुकरोतु । अन्वकरोत् । अनुकुर्यात् । अनुक्रियात् । अन्वका-

षीत्। अन्वकरिष्यत्। एवमेव पराकरोति। ( दूर करता है ) इत्यादि।

क्षिप—प्रेरणे। अभिक्षिपति ( फेंकता है )। अभिचिक्षेप। अभिक्षेप्ता। अभिक्षेप्स्यति। अभिक्षिपतु। अभ्यक्षिपत्। अभिक्षिपेत्। अभिक्षिप्यात्। अभ्यक्षैप्सीत्। अभ्यक्षेप्स्यत्। एवमेव प्रतिक्षिपति। अतिक्षिपतीत्यादि।

वह प्रापणे—प्रवहति ( निकलता है, बहता है )। प्रोवाह प्रोहतुः प्रोहुः। प्रोवहिथ प्रोवोढ, प्रोहथुः प्रोह, प्रोह प्रोहिव प्रोहिम। प्रवोढा। प्रवक्ष्यति। प्रवहतु। प्रावहत्। प्रवहेत्। प्रोह्यात्। प्रावाक्षीत् प्रावोढाम् प्रावाक्षुः। प्रावक्ष्यत्।

परिमृष्यति—( सहता है )। परिममर्ष। परिमर्षिता। परिमर्षिष्यति। परिमृष्यतु। पर्यमृष्यत्। परिमृष्येत्। परिमृष्यात्। पर्यमर्षीत्। पर्यमर्षिष्यत्।

विरमति—( देरी करता है )। विरराम, विरेमतुः विरेमुः। विरमिथ विरन्थ, विरेमथुः विरेम। विरराम, विररम, विरेमिव विरेमिम। विरन्ता। विरंस्यति। विरमतु। व्यरमत्। विरमेत्। विरम्यात्। व्यरंसीत्। व्यरंस्यत्। एवमेव आरमति। ( आराम करता है )। परिरमति ( ठहरता है )। उपरमति इत्यादि।

अध्यापयति—( पढ़ाता है )। अध्यापयाञ्चकार। अध्यापयाम्बभूव, अध्यापयामास। अध्यापयिता। अध्यापयिष्यति। अध्यापयतु। अध्यापयेत्। अध्याप्यात्। अध्यजीगपत् अध्यापिपत्। अध्यापयिष्यत्।

## उदाहरणानि।

अहं शाकं परिक्रीणे परिक्रीणीस्व त्वं बुसम्। विक्रीणेऽहं न ते विद्यामेषधर्मः सनातनः। विजेता विजयते समीके स्वशत्रून्। पराजयन्ते न कदापि क्षत्रियाः। गुरुवचनं नोच्चरे। एदिधिषेहमहं पूर्वम्, प्रमाथं देहि सत्तम! अनुकरोषि महेन्द्र!

नतानन ! भ्रमं पराकरोमि ते । हिमवतः प्रभवन्ति न सागराः । नृपतयो विरमन्ति भयान्विताः । आरमन्तिः समे बालाः कार्यं किमपि न कुर्वते । विजयते सदा सत्यम् ।

आशीविषः = सर्प । कुञ्जरः = हस्ती । सुराङ्गणा = अप्सरा । अहरहः = प्रतिदिन । आगारम् = गृह । आत्मीयम् = अपना । पृथग्जनः = नीच । धीसचिवः = मन्त्री । अन्ततः = आखिरकार । परिचर्या = सत्कार । तर्पणम् = तृप्ति । परिवृढः = स्वामी, मालिक । श्रीशः = लक्ष्मीवान् । वत्सलः = स्नेही । स्वच्छन्दः = स्वतन्त्र । निघ्नः = अधीन । विरक्रियः = सुस्त । कर्मक्षमः = डटकर काम करने वाला । कर्मशूरः = यत्नपूर्वक कार्य करने वाला । वचनेस्थितः = आज्ञाकारी, फर्माबरदार ।

## भावकर्मप्रकरणम् ।

भावमें समस्त लकारों में एक ही वचन होता है, तथा तृतीयान्तकर्ता होता है । भूयते बभूवे । भाविता भविता । भाविष्यते, भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट, भविषीष्ट । अभावि । अभाविष्यत, अभविष्यत । अकर्मक भी धातु उपसर्ग के संयोग से सकर्मक होजाता है । जैसे—अनुभूयते मैत्रेण त्वया मया तेन ताभ्यां युष्माभिर्वा आनन्दः । आनन्दावनुभूयेते । आनन्दा अनुभूयन्ते—यहाँ आनन्द अनुपूर्वक भूधातु का कर्म है इस आनन्द कर्म में लकारादि प्रत्यय के होने से इस में द्वितीया विभक्ति नहीं होती क्योंकि यह अनभिहित नहीं है । अनुपूर्वक भू धातु के सर्व लकारों में सर्वरूप होते हैं ।

णिजन्त से भाव कर्म में यक्—भाव्यते । भावयाञ्चक्रे, भावयाम्बभूवे, भावयामासे । भाविता, भावयिता । भाविष्यते । भावयिष्यते । भाव्यताम् । अभाव्यत । भाव्येत । भाविषीष्ट । भावयिषीष्ट । अभावि अभाविषाताम्, अभावयिषाताम् अभाविषत, अभावयिषत । अभाविष्यत, अभावयिष्यत ।

सन्नन्त से भावकर्म में—बुभूष्यते। बुभूषाञ्चक्रे। बुभूषिता। बुभूषिष्यते। बुभूष्यताम्। अबुभूष्यत। बुभूष्येत। बुभूषीष्ट। अबुभूषि। अबुभूष्यत।

यङन्त से भावकर्म में यक्—बोभूयते। बोभूयाञ्चक्रे। बोभूयिता। बोभूयिष्यते। बोभूयताम्। अबोभूयत। बोभूयेत। बोभूयिषीष्ट। अबोभूयि। अबोभूयिष्यत।

यङ्लुगन्त से भावकर्म में—बोभूयते। बोभवाञ्चक्रे। बोभाविता, बोभविता। बोभाविष्यते, बोभविष्यते। बोभूयताम्। अबोभूयत। बोभूयेत। बोभविषीष्ट, बोभाविषीष्ट। अबोभावि। अबोभविष्यत, अबोभाविष्यत॥ मयका स्तूयते विष्णुः। तुष्टुवे। स्ताविता, स्तोता। स्ताविष्यते, स्तोष्यते। स्तूयताम्। अस्तूयत स्तूयेत। स्ताविषीष्ट। स्तविषीष्ट। अस्तावि। अस्ताविष्यत, अस्तोष्यत।

ऋ—गतौ—गुणोर्त्तीति—गुणः—अर्यते। अराञ्चक्रे। अर्ता, आरिता। अरिष्यते, आरिष्यते। अर्यताम्। आर्यत। अर्येत। अर्षीष्ट, आरिषीष्ट। आरि। आरिष्यत।

स्मृ—स्मरणे। स्मर्यते। सस्मरे। स्मारिता, स्मर्ता। स्मारिष्यते, स्मरिष्यते। स्मर्यताम्। अस्मर्यत। स्मर्येत। स्मारिषीष्ट, स्मृषीष्ट। अस्मारि। अस्मारिष्यत, अस्मरिष्यत।

स्रंसु—हिंसायाम्। स्रस्यते—सस्रंसे। स्रंसिता। स्रंसिष्यते। स्रस्यताम्। अस्रस्यत। स्रस्येत। स्रंसिषीष्ट। अस्रंसिष्ट। अस्रंसिष्यत। टुनदि—समृद्धौ, नन्द्यते। ननन्दे। नन्दिता। नन्दिष्यते। नन्द्यताम्। अनन्द्यत। नन्द्येत। नन्दिषीष्ट। अनन्दि। अनन्दिष्यत। यज—देवपूजासंगतिकरणदानेषु। इज्यते। ईजे। यष्टासे। यक्ष्यते। इज्यताम्। ऐज्यत। इज्येत। यक्षीष्ट। अयाजि। अयक्ष्यत। तनु—विस्तारे—तायते, तन्यते। तेने। तनिता। तनिष्यते। तायताम्। तन्यताम्। अतायत अतन्यत। तायेत,

तन्येत । तनिषीष्ट । अतानि । अतनिष्यत । तप-संतापे—अनुतप्यते । अनुतेपे । अनुतप्तासे । अनुतप्स्यते । अनुतप्यताम् अन्वतप्यत । अनुतप्येत । अनुतप्सीष्ट । अन्वतप्त । अन्वतप्स्यत । डुदाञ्-दाने । दीयते । ददे । दातासे, दायितासे । दास्यते, दायिष्यते । दीयताम् । अदीयत । दीयेत । दासीष्ट, दायिषीष्ट । अदायि अदायिषाताम् अदायिषत । अदायिष्यत, अदास्यत । एवमेव धीयते । दधे । धाता धायिता । धास्यते धायिष्यते । धीयताम् । अधीयत । धीयेत । धासीष्ट, धायिषीष्ट । अधायि । अधास्यत, अधायिष्यत । भञ्जो-आमर्दने-भज्यते । बभञ्जे । भङ्क्तासे भङ्क्ष्यते । भज्यताम् । अभज्यत । भज्येत । भङ्क्षीष्ट । अभाजि, अभञ्जि । अभङ्क्ष्यत । डुलभष्—प्राप्तौ । लभ्यते । लेभे । लब्धासे । लप्स्यते । लभ्यताम् । अलभ्यत । लभ्येत । लप्सीष्ट । अलाभि, अलम्भि । अलप्स्यत । णीञ्-प्रापणे । नीयते । निन्ये । नेता, नायिता । नेष्यते, नायिष्यते । नीयताम् । अनीयत । नीयेत । नेषीष्ट, नायिषीष्ट । अनायि । अनेष्यत अनायिष्यत । इति भावकर्मप्रकरणम् ।

## अथ कर्मकर्तृप्रकरणम् ।

जब कार्य की बहुत सरलता को प्रकट करने के लिये कर्त्ता का क्रिया करना न कहा जावे तब अन्यकारक भी कर्तृ संज्ञाको प्राप्त होते हैं । सूर्यः फलं पचति इति । पचतः सूर्यस्य फलम् स्वयमेव पच्यते । देवदत्तः काष्ठं भिनत्ति-भिन्दतो देवदत्तस्य काष्ठं स्वयमेव भिद्यते । लिट्-पेचे । पक्ता । पक्ष्यते । पच्यताम् । अपच्यत । पच्येत । पक्षीष्ट । अपाचि । अपक्ष्यत । भिद्यते । बिभिदे । भेत्ता । भेत्स्यते । भिद्यताम् । अभिद्यत । भिद्येत । भित्सीष्ट । अभेदि । अभेत्स्यत । भावे भिद्यते काष्ठेन । पच्यते ओदनेन इत्यादि ।

---

दीर्घिका = बावड़ी। पद्माकरः = तालाब। आधारः = बांध आलवालम् = थाँवला । जम्बूद्वीपम् = एशिया । आवर्त्तः = भँवर। बिन्दुः = बूंद । प्रतीरम् = किनारा। पारम् = नदी के उस ओर। आवारम् = नदी के इस ओर । सौरभेयी = गाय। वन्ध्या = बांझ। शिवकः = खूंटा । वाणिज्यम् = व्यवहार, व्यापार। परिदानम् = लेनदेन । अश्मगर्भः = पन्ना । पद्मरागः = माणिक। प्रवालम् = मूंगा । चामीकरम् = सुवर्ण । रीतिः = पीतल । ताम्रकम् = तांबा। सौवीरम् = सुरमा। शिक्थम् = मोम। रङ्गजीवः = रंगरेज। शस्त्रमार्जः = शिकलीगर। कलादः = सुनार । दिवाकीर्त्तिः = नापित, नाई । शौण्डिकः = कलाल। प्रतिहारकः = मायावी। भारिकः = कुली। परिहासः = मज़ाक। परिचारिकः = सेवक। कौलेयकः = कुत्ता । गर्धभः = गदहा।

## अथ लकारार्थप्रकरणम्।

१ अभिज्ञावचन ( स्मृतिबोधक ) उपपद हो तो धातु से भूतानद्यतनकाल में लृट् लकार होता है। जैसे—स्मरसि चन्द्र! प्रयागे वत्स्यामः = बुध्यसे मैत्र ! काश्यां पठिष्यामः। चेतसे चैत्र! जयपुरं गमिष्यामः = चन्द्रदत्त याद है प्रयाग में रहते थे। मैत्र याद है काशी में पढ़ते थे। चैत्र याद है जयपुर को गये थे। यहाँ लङ् लकार के स्थान में लृट् होता है।

२ यदि यद् शब्द सहित स्मृतिवचन उपपद हो तो धातु से लृट् लकार नहीं होता। जैसे—अभिजानासीन्दो ! यद् गुरुकुले अपाठिष्म = इन्दु याद है जब गुरुकुल में पढ़ते थे। यत् शब्द के साथ में होने से पठिष्यामः प्रयोग न हुआ।

३ स्म शब्द उपपद हो तो परोक्षभूत अनद्यतन अर्थ में वर्त्तमान धातु से लट् लकार होता है। जैसे-पठन्ति स्म पुरा वेदानार्यावर्त्तस्य ब्राह्मणाः = प्राचीनकाल में आर्यावर्त्त के ब्राह्मण वेदों को पढ़ा करते थे।

४ भूत अनद्यतन अपरोक्षकाल में भी स्म उपपद हो तो लट् लकार होता है। जैसे—एवं ब्रवीति स्म पिता मदीयः = यहां लङ् के स्थान में लट् प्रयुक्त है।

५ वर्तमान के समीप जो भूत वा भविष्यत् काल उसमें वर्तमान के तुल्य लकार होता है। जैसे—परमानन्द! कदागतोऽसि अयमागच्छामि। आगच्छन्तमेव मां विद्धि। अयमागमम्। परमानन्द कब आये? अभी आरहा हूँ। धर्मानन्द! कर्हि गमिष्यसि—एष गच्छामि गच्छन्तमेव मां विद्धि। एष गमिष्यामि।

६ जब कि आशंसा (प्रियार्थप्राप्तीच्छा) समुपस्थित होती है तब भविष्यत् काल में भी भूत तथा वर्तमान के सदृश लकार होते हैं। जैसे—मेघश्चेद्‌वर्षीत् वर्षति वर्षिष्यति वा—धान्यमवाप्स्म, वपामः, वप्स्यामो वा। यदि मेघ वर्षेगा तो अन्न बोवेंगे यहाँ पर 'वप्स्यामः' के स्थान में 'अवाप्स्म' 'वपामः' का अर्थ भी बोवेंगे है।

७ क्षिप्र (शीघ्रार्थ) वचन उपपद होतो आशंसा गम्यमान होने पर धातु से लृट् लकार होता है। जैसे—वृष्टिश्चेत् श्वः क्षिप्रं त्वरितमाशु चपलं वा यास्यति शीघ्रं वप्स्यामः = यदि कल वर्षा होगी तो शीघ्र बोवेंगे। श्वः क्षिप्रमध्येष्यामहे = कल हम शीघ्र पढ़ेंगे। यहां पर लृट् लुट् का बाधक है।

८ आशंसा वाची उपपद हो तो धातु से लिङ्‌लकार होता है। जैसे—गुरुश्चेदुपेयादाशंसे अधीयीय। आशंसे क्षिप्रमधीयीय = यदि गुरुजी आवेंगे तो मैं चाहता हूँ शीघ्र पढ़ूंगा। चाहता हूँ शीघ्र पढ़ूँगा यहाँ लृट के स्थान में लिङ हुआ है।

९ यच्च तथा यत्र उपपद हो तो चित्रीकरण गम्यमान होने पर धातु से लिङ् लकार होता है जैसे—यच्च यत्र भवान् मस्करी भूत्वा चौर्यं कुर्यात् आश्चर्यमेतत् = आप संन्यासी होकर चोरी करते हैं। यह लज्जास्पद है लट् के स्थान में लिङ् हुआ है।

हेतु तथा हेतुमान् अर्थ में विकल्प से लिङ् लकार होता है। पक्ष में लृट् जैसे—धर्मं कुर्याच्चेत्सुखं यायात् धर्मं, करिष्यति चेत्सुखं यास्यति = यदि धर्म करेगा तो सुख को प्राप्त होगा।

---

मतिरेव बलाद् गरीयसी। धर्मस्य त्वरिता गतिः। भवन्ति भव्येषु हि पक्षपाताः। पदं हि सर्वत्र गुणैर्निधीयते। एकाक्रिया द्व्यर्थकरी प्रसिद्धा। मूर्खस्य नास्त्यौषधम्। क्षते प्रहारा निपतन्त्यभीक्ष्णम्। धनक्षये दीव्यति जाठराग्निः। छिद्रेष्वनर्था बहुली भवन्ति। शूराः प्रयान्ति त्रिदिवं समरप्रिया ये। अङ्गीकृतं सुकृतिनः परिपालयन्ति। परोपकाराय सतां विभूतयः। कुगेहिनीं प्राप्य गृहे कुतः सुखम्। हितं मनोहारि च दुर्लभं वचः। गुणी गुणं वेत्ति न वेत्ति निर्गुणः। चिन्तासमं नास्ति शरीरशोषणम्। नये च शौर्ये च वसन्ति सम्पदः। निर्वाणदीपे किमु तैलदानम्। मूर्खस्य किं शास्त्रकथाप्रसङ्गः। रक्षन्ति पुण्यानि पुराकृतानि। विद्यासमं नास्ति शरीरभूषणम्। विनाशकाले विपरीतबुद्धिः। सम्पूर्णकुम्भो न करोति शब्दम्। अर्धो घटो घोषमुपैति नूनम्। संसर्गजा दोषगुणा भवन्ति। न पर्वताग्रे नलिनी प्ररोहति। न वेत्ति यो यस्य गुणप्रकर्षं स तस्य निन्दां सततं करोति। अज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः। अन्यायं कुरुते यदा क्षितिपतिः कस्तं निरोद्धुं क्षमः। अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते। अर्धमात्रालाघवेनापि पुत्रोत्सवं मन्यते वैयाकरणाः। अल्पश्च कालो बहवश्च विघ्नाः। अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम्। कण्ठे सुधा भवति वै खलु सज्जनानाम्। कर्मानुगो गच्छति जीव एकः। कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते। कामातुराणां न भयं न लज्जा। किं जीवितेन पुरुषस्य निरक्षरेण। किमिष्टन्ननं खरशूकराणाम्। कुदेशमासाद्य कुतोऽर्थसञ्चयः। कुशिष्यम-

ध्यारयतः कुतो यशः । गुणैर्विहीना बहुजल्पयन्ति । दैवी विचित्रा गतिः । धिग्जीवितं चोद्यमवर्जितस्य । नहि कृतमुपकारं साधवो-विस्मरन्ति । न्याय्यात्पथः प्रविचलन्ति पदं न धीराः । प्रायो-गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः । प्रारभ्य चोत्तमजना न परित्यजन्ति । बलवति सति दैवे बन्धुभिः किं विधेयम् । बली बलं वेत्ति न वेत्ति निर्बलः । बलीयसी केवलमीश्वरेच्छा । बुभुक्षितः किं न करोति पापम् । बुभुक्षितं न प्रतिभाति किञ्चित् । बुभुक्षितैर्व्याकरणं न भुज्यते । भक्त्या हि तुष्यन्ति महानुभावाः । भवति योजयितुर्वचनीयता । भवो हि लोकाभ्युदयाय तादृशाम् । भार्यासमं नास्ति शरीरतोषणम् । भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति । मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् । मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः । महाजनो येन गतः स पन्थाः । महान्महत्येव करोति विक्रमम् । मात्रा समं नास्ति शरीरपोषणम् । मौनं विधेयं न कथं सुधीभिः । यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः । यथौषधं स्वादुहितं च दुर्लभम् । यद्धात्रा निजभालपट्टलिखितं तन्मार्जितुं कः क्षमः । यद्यपि शुद्धं लोकविरुद्धं नाकरणीयं नाचरणीयम् । ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे । सत्ये नास्ति भयं क्वचित् । रत्नं समागच्छतु काञ्चनेन । लक्ष्मीर्यस्य गृहे स एव भवति प्रायो जगद् वन्द्यताम् । वक्रे विधौ वद कथं व्यवसाय-सिद्धिः । वनेषु दोषा प्रभवन्ति रागिणाम् । विद्यातुराणां न सुखं न निद्रा । विधिरहो बलवानिति मे मतिः । शूरं कृतज्ञं दृढसौ-हृदं च लक्ष्मीः स्वयं याति निवासहेतोः । सकलगुणभूषा च विनयः । सङ्गः सतां किमु न मङ्गलमातनोति । सतां हि सङ्गः सकलं प्रसूते । सत्पुत्र एव कुलसद्मनि कोऽपि दीपः । सन्तोष एव पुरुषस्य परं निधानम् । संदीप्ते भवने तु कूपखननं प्रत्यु-द्यमः कीदृशः । समानशीलव्यसनेषु सख्यम् । सर्वे गुणाः काञ्च-

नमाश्रयन्ति । सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । सिद्ध्यन्ति कुत्र सुकृतानि विनाश्रमेण । स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् । वृक्षं क्षीणफलं त्यजन्ति विहगाः । वृद्धा न ते ये न वदन्ति धर्म्मम् । शीलं हि सर्वस्य नरस्य भूषणम् । शुष्केन्धने वह्निरुपैति वृद्धिम् । सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं केवलम् । साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः। स्वभाव एवैष परोपकारिणाम् । स्ववीर्यगुप्ता हि मनोः प्रसूतिः । कण्ठे सुधा वसति वै खलु सज्जनानाम् । अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति । अजीर्णे भोजनं विषम् । अति सर्वत्र वर्जयेत् । अधिकस्याधिकं फलम् । अपथ्यानं तु गच्छन्तं सोदरोऽपि विमुञ्चति । अमृतं क्षीरभोजनम् । अमृतं प्रियदर्शनम् । अमृतं शिशिरे वह्निः । अर्थातुराणां न गुरुर्न बन्धुः । अल्पविद्यो महागर्वी । अविद्यं जीवनं शून्यम् । अश्वा यस्य जयस्तस्य । अस्थिरं जीवितं लोके । अस्थिराः पुत्रदाराश्च । अस्थिरे धनयौवने । अहितो देहजो व्याधिः । अहो रूपमहोध्वनिः । आचारप्रथमो धर्मः । आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् । इष्टं धर्मेण योजयेत् । उदारचरितानां तु वसुधैवकुटुम्बकम् । उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये कर्त्तव्यो महदाश्रयः । कर्मणो गहना गतिः कर्मानुगो गच्छति जीव एकः । कवयः किं न कुर्वन्ति किं न खादन्ति वायसाः । सत्यं कण्ठस्य भूषणम् । अजीर्णे भेषजम् वारि जीर्णे वारिबलप्रदम् । अमृतं भोजनार्धे तु भुक्तस्योपरि तद्विषम् । अक्षराणि समानानि वर्तुलानि घनानि च । परस्परविलग्नानि लेखनीयानि बालकैः । कंसं जघान कृष्णः काशीतलवाहिनी गङ्गा । केदारपोषणरता कम्बलवन्तं न बाधते शीतम् । काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् । व्यसनेन च मूर्खाणां निद्रया कलहेन वा । काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः ।

वसन्तसमये प्राप्ते काकः काकः पिकः पिकः। गत शोको न कर्त्तव्यो भविष्यन्नैव चिन्तयेत्। वर्तमानेषु कार्येषु वर्तयन्ति विचक्षणाः। शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना। नालिका गतमपि कुटिलम् न भवति सरलं शुनः पुच्छम् तद्वत् खलजनहृदयं बोधितमपि नैव याति माधुर्यम्। प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्त्तते। करिष्यति विना कार्यं कथं यत्नं कृती नरः। अक्षीणो वित्ततः क्षीणावृत्ततस्तु हतोहतः।

## विभक्तिव्यवहार।

### १ प्रथमा।

कर्त्तरि—सृजति पाति हरते च परेशः।

सम्बोधने—जगदीश! विभो! भवपालयितः!

अव्ययोगे—बलिर्ददातेति विख्यातः।

नाम्नि—नभः क्षितिर्वारि समीरवह्नी।

उक्तकर्मणि—शिक्ष्यन्ते गुरुणा शिष्याः।

### २ द्वितीया।

कर्मणि—पुष्पं मा छिन्धि, मा छिन्धि, फलं चेन्द्रोदयसे शिशो!।

प्रतियोगे—भक्तिं विधेहि सततं प्रतिशङ्करं वै।

अनुयोगे—मृतमनुधावति धर्माधर्म्मम्।

धिग्योगे—धिगस्तु कृपणं पुरुषं धनाढ्यम्।

निकषायोगे—वृन्दावनं गुरुकुलं निकषा विराजते।

अन्तरा योगे—हिमालयं विन्ध्यगिरिं ह्यन्तरा विराजते या पृथिवी पवित्रा।

अन्तरेण योगे—न पूज्यते पौरुषमन्तरेण।

यावत् योगे—मृत्युं यावत् क्लेशमाप्नोति मूर्खः।

अध्वकालवाचक शब्दाभ्यां व्याप्त्यर्थे } बहून् क्रोशान् राजते विन्ध्यशैलः। वने ऊषुः पाण्डवा द्वादशाब्दान्।

विनायोगे—स्वाधीनतां भुवि विना नहि सौख्यमन्यत् ।
न कौमुदी भाति मनोरमां विना ।

| | |
|---|---|
| तस्प्रत्ययान्तपरिसर्वो भयथाभिः शब्दयोगे | जयपुरं परितः परिखा कृता । प्रदेशं सर्वतो निन्दा कृपणस्य प्रजायते । |

नदीमुभयतः स्थानं जनेन तटमुच्यते ।
दिनमणिमभितः कुतोऽन्धकारः ।

| | |
|---|---|
| अधिपूर्वशीङ्स्थासवसामधिकरणे | मलयाचलमध्यास्ते, चन्दनं न वनं वनम् । शुक्तिं मुक्ताधिवसति, स्वर्गं बुधोऽधितिष्ठति भीष्मोऽधिशिश्ये किल वाणशय्याम् । |

क्रियाविशेषणे च-शून्यं शब्दायते पात्रमधिकं न तु पूरितम् ।

## ३ तृतीया ।

काणेन चक्षुषा किं वा चक्षुः पीडैव केवलम् ।

| | |
|---|---|
| सहार्थं शब्दयोगे सहार्थे च | क्रूरेण सार्द्धं न विधेहि सख्यम् । सज्जनैः सह संवसेत् । |

केनापि साकं कलहं न कुर्यात् ।
सन्ध्याचारिणा समम् ।
भूपो मन्त्रयतेऽमात्यैः ।

विनायोगे—सहायेन विना कार्यं किमपि नैव सिध्यति ।
किं योगे—धनेन किं यो न ददाति नाश्नुते ।
अलं योगे—अलं महीपाल ! तव श्रमेण ।
तुल्यार्थशब्दयोगे—अन्यो गुणो नो विनयेन तुल्यः ।
विकृताङ्गे—पृष्ठेन कुब्जः प्रतिभाति वृद्धः ।
स्वभावादिशब्दयोगे—भूषाभिः किं सुन्दरो यः प्रकृत्या ।
ऊनार्थ शब्दयोगे—ज्ञानेन हीनाः पशुभिः समानाः ।

| | |
|---|---|
| विशिष्टार्थे लक्षणबोधकशब्दात् | मयैकोबालकोदृष्टः सौन्दर्येण गुणेन च । |

हेतौ — ज्ञानेन मुक्तिं लभते मनुष्यः।

फलवति काले } त्रिभिर्वर्षैः शब्दशास्त्रं पपाठ।
अनुक्तकर्त्तरि च } प्रसार्यते केन करः कृशानौ ?

### ४—चतुर्थी।

सम्प्रदाने—दीनेभ्यो दीयताम् दानं यदि धर्म्ममभीप्ससि।

रुचधातुयोगे—कदाचिच्चाटुवचनं सुजनेभ्यो न रोचते।

निमित्तार्थे—खलस्य विद्याचातुर्यं नोपकाराय कस्यचित्।

प्रतीकारार्थे—रोगायौषधमाहरन्तु चपलम्।

नमः स्वस्त्यादि योगे (१) } नमः शान्ताय तेजसे।
स्वस्ति प्रजाभ्यो विदधाति राजा।

समर्थार्थशब्द क्रियायोगे } सदा शठः शठालाय मल्लोमल्लाय शिद्यति।

अनादरार्थे मनधातोः } तृणाय विश्वं कुपितोऽनुमन्यते।

कर्मणि विभाषा—चित्रं दर्शयते शिवाय चन्द्रः।

क्रियायोगे च—प्रजाः प्रेरयन्ति नृपायोपहारम्।

### ५—पञ्चमी।

अपादाने—बिभेति पापान्नितरां सुरेन्द्रः।
वृक्षात्पतन्ति कुसुमानि हि कूपमध्ये।

क्रियार्थे कर्मणि अधिकरणे च } रथादयं पश्यति धर्मनाथः।

अवध्यर्थे—पौषस्यैकादशदिनात् षण्मासा उत्तरायणम्।

अपेक्षार्थे—जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।

बहिरादि शब्दयोगे } पुराद् बहिर्दुर्जनान् विवासयेत्।
शिक्षते शिक्षकादारात् बाल्यात् प्रभृति सञ्चयम्।

---

१—आदिशब्देन स्वाहा स्वधा वषट् ग्रहणम् अग्नये स्वाहा इत्यादि।

विनायोगे—श्रमाद् विना को लभते निजेष्टम् ।
ऋते योगे—ज्ञानादृते न लभते मनुजोऽपवर्गम् ।
आङ्योगे—आबाल्याद् धार्मिको भवेत् ।
अन्यार्थशब्दयोगे—धर्मादन्यः कोऽस्ति दुःखापहारी ।
हेतौ च—बालको धर्मनाथोऽयम् अधर्माद् दुःखमश्नुते ।

## ६—षष्ठी ।

सम्बन्धे—यस्यास्ति वित्तं स नरः कुलीनः ।
सदृशार्थशब्दयोगे—युधिष्ठिरस्य सदृशो नहि सत्यवक्ता ।
निर्धारणे—नराणां नरेषु वा क्षत्रियाः शूराः ।

## ७—सप्तमी ।

कालाधिकरणे—वर्षासु भेका हि रुवन्ति सर्वदा ।
एकदेशाधिकरणे—गृहे चेन्मधुविन्देत किमर्थं पर्वतं व्रजेत् ।
विषयाधिकरणे—सदा मतिं सुकर्मसु प्रधीनरः करोतु वै ।
भावे—चौरे गते वा किमु सावधानैः ।
निर्धारणे—विनयी गुणिषु वरिष्ठः । लोके स एव श्रेष्ठः ।

# कारकोदाहरणानि ।

तापसा वनात् फलानि समाहृत्य भुञ्जते । गुरवः सर्वदा शिष्येभ्यः सदुपदेशं ददति । ये बाल्ये यत्नेन विद्यामुपार्जयन्ति यथाशक्ति च दीनेभ्यो दानं ददति ते बालकाः प्रशंसां लभन्ते । शीतान्ते विटपेभ्यः परिणतानि दलानि पतन्ति पुनर्वसन्तकाल-समागमेन नूतनपत्राणि समुद्गत्य तेभ्यो नवशोभान्वितं विचित्रं परिच्छदं प्रयच्छन्ति । ये परिश्रमेण विद्याधनं नोपार्जयन्ति शत्रुभ्यो बिभ्यति पिपासातुराय जलं सामर्थ्ये सति क्षुधिताय भोजनं न ददति धर्मे नानुरज्यन्ति त एवावद्याः । ये सुखमि-

च्छेयुस्तैर्यत्नेन पापकर्मभ्यः परावर्त्य मानसं पुण्यक्रियायां नियोजनीयम्। अपरेभ्यश्च सदुपदेशो दातव्यः।

## प्रभातम्।

रजनी प्रभाताभूत्। पूर्वस्यां दिशि समुदितो भानुः, पक्षिणः कूजन्ति, स्वकुलायान् नानादिग्देशेषु प्रतिष्ठन्ते च। नानाविधानि पुष्पाणि प्रफुल्लानि दृश्यन्ते। धेनवो गृहाद् बहिर्गच्छन्ति। कृषका लाङ्गलं गृहीत्वा क्षेत्रकर्मणे यान्ति। गोपा दुग्धं दुहन्ति। गोपाङ्गना मन्थनयन्त्रे दधि मन्थनन्ति। शिशवः समवेता भूत्वा पुस्तकमधीयते। वेदपाठिनो बटवो ब्रह्मचारिणः साम गायन्ति। द्विजोत्तमाः सन्ध्योपासते हवनं च विदधति। शीतलः समीरणो मन्दं मन्दं वाति। अथ सूर्य्य उदेति। अन्धकारो दिवाकरं दृष्ट्वा चौर इव दूरं पलायते। सरसि पद्मानि प्रस्फुटन्ति। भ्रमराः पुष्पमधुपानायेतस्ततः उड्डीयमाना मधुरं झङ्कुर्वन्ति। सरघा मधुक्रमं निर्मातुमारभन्ते। कुमुदिन्यो म्लायन्ति। परेशभक्ताः परमात्मनामानि संकीर्तयन्ति। गृहस्थानां कोलाहलः श्रूयते। व्यवसायिनोजनाः स्वकर्मसिद्ध्यर्थमितस्ततो विचरन्ति। श्रमजीविनः प्रभुकर्मसु प्रवर्त्तन्ते। पथिकाः कक्षे पुट्टलिकामादाय पन्थानमनुसरन्ति। भोबालकाः यूयमिदानीं शयनं विहाय मुखं च प्रक्षाल्य स्वपाठे मानसं निवेशयत। अयमेव प्रकृतकालः पठनस्य

भो विद्यार्थिनः! सद्मनि सम्यक् पाठं स्मरत। निरूपितसमये विद्यालयं च गच्छत। आत्मनीनं स्थानमुपविश्य पुस्तकमुद्घाट्य च शनकैः शनकैः पठितपाठम् प्राक् चर्चयत। केनापि सार्द्धं विरोधः कोलाहलः कलहो वा न करणीयः। कलहे विरोधे कोलाहले च कृते सति शिक्षका युष्मान् प्रति भृशं विरक्ता भविष्यन्ति दण्डं च विधास्यन्ति। एवं करणेन सुशिक्षायां बाधा संजायते। उपदेष्टारो यान् प्रति नियतमसन्तुष्टा भवन्ति नूनं तेषां विद्या

न जायते । सहाध्यायिनो बालकान् बन्धून् सर्वदा जानीत । मित्रताचरणेन च तैः सह व्यवहरत । शिक्षका नः परमहितैषिणो गुरव इति सर्वदा युष्माभिः स्मर्त्तव्यम् । ते युष्मत्सकाशेऽर्थं न प्रार्थयन्ते । कायेन वाचा मनसापि नित्यं समुन्नतिमिच्छन्तः पाठनकार्येषु नानाविधं कौशलमाविष्कृत्य युष्मान् शिक्षितुं यतन्ते । युष्मासु विद्यायां निपुणेषु सत्सु ते परमं सन्तुष्यन्ति । प्रात्यहिकः पाठो यावद् वो हृदयङ्गमो न भवेत् तावत् प्रयत्नः । अर्थबोधं विना पठनेन किञ्चिदपि फलं नास्ति । अवकाशे जाते पाठशालातः प्रत्यावृत्य यथास्थानं पुस्तकानि संरक्षणीयानि । पाणिपदं प्रक्षाल्य किञ्चिद् भुक्त्वा पानीयं च पीत्वा किञ्चिद् विश्रामं कुर्यात् । अपराह्णसमये नगरात् बहिः पादचारणयाथवा व्यायामार्थं गच्छत । सन्ध्यासमीरसेवनेनारोग्यं सञ्जायते । प्राभातिकः सायङ्कालिकश्च वायुः परमोपकारी । तत्रैव यद्यापगा स्यात्तर्हि तत्रैव सन्ध्योपासनं विधेयम् । पुनर्गृहमागत्याशनं कृत्वा पाठस्मरणे संलग्ना भवेत एवं करणेन विद्या देवी सौकर्येण समायाति ।

## स्वभावः ।

यस्य यादृशः स्वभावो भवति स तेन दुष्परिहार्य्यः । स सर्वेषां गुणानामुपरि वर्त्तते । यदि कोऽप्यङ्गारं शतवारं सहस्रवारं वा दुग्धेन धौतं कुर्यात्तथापि तस्य स्वाभाविकी मलिनता न विनश्यति । सर्पो यदि पोषितः स्यात्स किं पालकं न दशति । श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् । बहुविधविनयस्तुतिभिरपि समीरणो न स्थिरायते । किन्तु यथा निमित्तवशादग्नेरुष्णत्वम् नानुभूयते । सलिलस्योष्णता काठिन्यञ्च जायते, अङ्गारोऽपि हेमप्रभां लभते । तथा विद्या संसर्गादिकरणेन स्वभावः परिवर्तत इव लक्ष्यते । यथा कारायां शृङ्खलेनावरुद्ध-

श्चौरो दस्युर्वा स्वव्यवसायं कर्तुमिच्छन्नपि न तत् साधयितुं प्रभवति, तथा विद्यासंसर्गादिरूपेणावरणेनावृतः कुस्वभावोऽपि बहिः स्वशक्तिं प्रकटयितुं न शक्नोति । परं सुचिरक्षानुशीलेन सज्जनसहवासादिना च स भृष्टबीजसमो भवति । भो बालकाः ! श्रुतं युष्माभिः कवीनामादर्शो महर्षिर्वाल्मीकिः प्रथमतो रत्नाकरनामको दस्युरासीत्। अनेकमानवानां प्राणांश्च संजहार। ततो देवर्षेर्नारदस्योपदेशादीश्वरमाराध्य लब्धबोधो मुनीनामग्रगण्यो बभूवेति । परमरमणीयं रामायणं तस्य महर्षेरगाधबोधस्य प्रमाणमद्यापि जगति देदीप्यते ।

## प्रियभाषणम् ।

यो मधुरालापि कदापि न कोऽपि तं निन्दति । तस्य चानात्मीयः कश्चिन्न भवति । यथा वयं परेषां मुखात् प्रियभाषणमाकर्णयं इच्छामः, तांश्च प्रियान् मन्यामहे तथावयमपि प्रियं ब्रवामहे । अस्मानपीतरे जनाः प्रियान् मंस्यन्ते । अस्मान् प्रति सन्तोषयन्ति च । योऽन्येषां कटुभाषणं श्रोतुमसमर्थस्तेन स्वकीयं भाषणमपि परिशोधनीयम् । कटुभाषिणा सह न कोऽप्यालपति न तमाद्रियते । किमपरं जनकजननीभ्रातृबन्धुप्रभृतयः स्वजना अपि न तं प्रियं मन्यन्ते । ते सर्वे निरन्तरं तस्मादुद्विजन्ते । कस्यापि समक्षमप्रियं सत्यमपि वचनं कर्कशभावेन ब्रूयात् । तथोक्ते तस्य हृदये महत् कष्टं संजायते । येनान्येषां दुःखमुत्पद्यते तत्कर्म सर्वथा परिहेयम् । एषैव भद्रजनानां रीतिः । विवेचनीयम् अस्मद् गृहे कश्चिद् दोषो जातः, यदि कोऽपि तं दोषं सभायामस्मत्समीपे समागत्य परिकीर्तयति, तदानीमस्माकं चेतसि कीदृशं दुःखं कीदृशश्च क्रोधो जाजायते । यथात्मनि शोकहर्षं भवति तथैव सर्वैः सर्वत्रमन्तव्यम् । अप्रियवादीजनः कुत्रापि प्रतिष्ठां न लभते । सर्वत्र दुःखमनुभवति । प्रियवादी

न्दा सुखी भवतीदं केनापि कदापि न विस्मरणीयम् । कापरः प्रियवादिनामिति नीतिः ।

## विद्या ।

अजरामरवत् प्राज्ञो विद्यामर्थमुपार्जयेत् । विद्या हि परमं धनम् । अनेन धनेन सदृशमन्यत् किञ्चिदपि धनं जगति न विद्यते । तस्कर इदं धनमपहर्तुं दस्यु र्वा बलेन ग्रहीतुं न शक्नोति । ज्ञातिभिः सार्द्धमस्य विभागो नो भवति । दानकरणेनापि क्षयं न प्राप्नोति । अपित्वधिकतरं वर्धत एव । विदेशगमने विद्या बन्धु इव साहाय्यं विदधाति, यस्य सविधे विद्याधनं स एव संसारे मनुष्यपदगौरवं लभते, स एव भुवि देवता स एव सर्वेषां समादरास्पदं च एभिर्विद्यार्जिता त एव संसारे प्रतिष्ठां लेभिरे । तेषामचला कीर्त्तिरासंसारं स्थास्यति विद्या प्रभावेणैव कालिदासप्रभृतयः कवयो रघुवंशादीनि काव्यान्यरीरचन् । गोतमादयोमुनयोन्यायदर्शनादीनि रचयामासुः । पाणिनिरष्टाध्यायीञ्चकार । भगवता मनुना मनुस्मृतिर्व्यरचि । विद्याभूषणालीलावती लीलावतीं कृतवती एवं बहवो महानुभावा विद्याधना गणितज्योतिश्चिकित्साधर्म्मशास्त्राणां प्रणेतारो बभूवुः । अस्मदीयाः पूर्वजा महात्मानः परास्वपरासु विद्यासु निष्णाता आसन् । एवमेव बहुभिर्महद्भिः पण्डितैर्बहूनि पुस्तकानि निर्मितानि तानि पठित्वा मानवा विविधानुपदेशान् श्रुत्वा अतीवज्ञानोत्कर्षं लभमानाः स्वजातीयानां मध्ये देवा भवन्ति । स्वदेशानामुन्नतये नियतं यतन्ते च यस्य नरस्य च विद्या धनं नास्ति स एव जगतीतले महान् दरिद्रः । मूर्खोऽयमुद्धतोऽयमित्युक्त्वा सर्वे जनास्तमवजानन्ति । पश्यत, यूरोपीयाः केवलेन विद्याप्रभावेणैव साधारणानां बोधागम्यानि ईदृशानि शिल्पयन्त्रवर्त्तावहलोहयन्त्रवाष्पीयानव्योमयानप्रभृतीनि कार्याणि कुर्वन्ति । न केवलं विद्यया ज्ञानलाभः प्रभूतार्थागमोऽपि जायते । विद्यया पुरुषाणामभिज्ञता

सूक्ष्मदर्शिता च सम्पद्यते। ततो राज्ञःप्रियकर्माणो भवन्ति सुतरान्ते प्रचुरं धनमपि लब्धुं शक्नुवन्ति, येन धनेन बहूनि कार्याणि सिध्यन्ति। विद्या हि परमं धनम्।

## मूर्खता।

यस्य विद्या न विद्यते स एव मूर्खः। मूर्खजनस्य दोषाणामियत्ता नास्ति। उपदेशोऽपि मूर्खस्य प्रकोपाय न शान्तये भवति। बालिशः किं हितम् किमहितम् को धर्मो वाऽधर्म इति विचारयितुं न शक्नोति। मात्रा पित्रा भ्रातृबन्धुभिश्च साकं कीदृशं व्यवहर्तव्यम्, स्वदेशोन्नतये शिशूनां शिक्षार्थं किं कर्तव्यम्, केनोपायेन जनान् धर्ममार्गानुवर्त्तिनः कुर्यादित्यादिकं किञ्चिदपि न जानाति। मूर्खो यदि दरिद्रः स्यात्तर्हि तस्योदरपोषणमपि काठिन्येन भवति। कोऽपि पुरुषस्तं दृष्ट्वा न प्रसीदति अपि तु मूढं संवीक्ष्य विद्वान् विषीदति। अज्ञो बालः पित्रोरपि सुखावहो न भवति। फलतो मूर्खः किमपि न संसारे सुखयति अपि तु यत्र यत्र स गच्छति तत्र तत्र दुःखयति। अपरमेतस्मात्सर्वदा अनिष्टं सञ्जायते। किमन्यत् वच्मि मूर्खो दुःखाकरः। अयि भो बालाः! सर्वदा यूयमेवं सावधाना भवेत यथा मूर्खता पिशाची युष्मान्नाक्रामेत। मूर्खतायाः प्रतीकारोऽपि न विद्यते। सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम्। मूढो जनो दुःखशतानि भुङ्क्ते।

## समयः।

आलस्येन खेलनेन वा समयं वृथा न यापयेत। सत्कर्मणैव कालातिपातः कर्त्तव्यः। रात्रिर्गमिष्यति भविष्यति सुप्रभातम्, दिनमणिः पुनरुदेष्यति पुनरपि दिनमापतिष्यति। परं युष्माभिर्यः समयोऽतिवाहितस्तं पुनः प्रचुरधनव्ययेन बहुप्रयत्नेन प्रभूतपरिश्रमेण वा प्राप्तुं न शक्ष्यथ। नीतिविदो वदन्ति वय-

मपि पश्यामः ये मूढा आलस्येन क्रीडया विद्यां प्रति औदास्येन बाल्यकालं वृथा यापितवन्तस्तेषां मध्ये कोऽप्यधुना गृहस्थानां द्वारि द्वारि भिक्षार्थं भ्रमति कोऽप्यात्मीयानां गलग्रहो भवति, कोऽपि च धनिकानां गेहे मरणाप्यधिकं दासत्वमाचरति। सुखेन स्वोदरपूर्त्तिरपि तेषां दुःसाध्या भवति। हंहो शिशवः ! इदानीमेव युष्मान् सावधानान् कर्तुंवयमिच्छामः शृणुत अस्मद्वचनमस्मिंश्च विश्वसित । कथमपि युष्माभिर्बाल्यकालो वृथा नहि यापनीयः, इतः परमिमां वेलां कदापिनो प्राप्स्यथ । किं कदापि पाणिविक्षिप्तो लोष्टो भूयः प्रत्यागच्छति ? यो गतः स गत एव । अतएव कालमहिमा महता ध्यानेन विचारणीयः। कालस्य गहना गतिः।

## पराधीनता ।

पराधीनता मानवानामन्त्यविध मरणमेव । यो यस्याधीनो भवति स गर्हितामप्रियामपि तस्य प्रभो राज्ञां पालयितुं बाध्यते, स्वाभिमतं कर्म सम्पादयितुं न कदापि पारयति च । तस्य चेतसि यो योऽभिलाष उदेति स मेघे विद्युदिव पुनस्तत्रैव विलीयते। स्वामी स दैवाधीनं जनमलसमपराधिनमिव मन्यते। कियन्तो मानवाः पराधीनाः प्रभोर्जयाय समरे प्राणांस्त्यजन्ति । पराधीनस्य नरस्य कदाचिदपि मनसः प्रशमनं सुखं न जायते। असौ दुःखितोऽपि मनसि प्रभोः सुखं विज्ञाय आत्मनीनं मित्रमिव दर्शयितुं तस्य च हास्यं विलोक्य अनुहसितुं च बाध्यते। अतः सर्वथा सर्वैरेवपराधीनताशृङ्खले चरणौ न देयौ पराधीनतायां राजभोग्यद्रव्यमपि न मधुरम् । स्वाधीनतायां शाकान्नमप्यमृतम्। सर्वं परवशं दुःखम्, सर्वमात्मवशं सुखम्।

## सत्सङ्गः ।

विद्याभ्यास इव सत्सङ्गोऽपि स्वभावशासनस्य महानुपायः दृश्यते तावदस्माभिः, अयस्कान्तमणेर्योगाल्लोहोऽपि सद्गुणं

लभमान एवाकर्षको भवति। निम्बवृक्षारूढा मधुरलता कटुकायते। विषसंपृक्तं मिष्टमन्नमप्यभोज्यं संजायते । कीटोऽपि सुमनः सङ्गादारोहति सतां शिरः।तापनेन शोधनेन वा विषमप्यमृतायते। मूढमतीनां जनानां मूढत्वं सागरपारं यायाति। ये च कटुभाषिणस्ते मधुरालापिनः संजायन्ते। ये पापकर्मप्रिया भवन्ति ते धर्मबुद्धयो जायन्ते।पानीयं सर्वत्र मूल्यमन्तरा लभ्यते तदेव तोयं यदा दुग्धसङ्गि भवति तदा दुग्धमूल्येन विक्रीयते। कारुसंसर्गादस्पृश्यानि अस्थीनि चर्माणि वा स्पृश्यतां प्राप्नुवन्ति । यदि सामान्यप्रस्तरोऽपि मुकुटे निहितः स्यात् तर्हि सोऽपि जनानां गौरवं लभते। स्वस्थानस्थितः कापुरुषोऽपि सिंहायते। केचन मानवाः सत्सङ्गवशान्नानागुणविभूषिताः सन्तो मनुष्यपदगौरवं वर्द्धयन्ति, कियन्तश्च पुरुषा दुर्जनसङ्गात् पशुभिः समाना भूत्वा आत्मनि लोकानामवज्ञां दृढयन्ति। केनापि ते मनुष्यगणनायां न परिगण्यन्ते। अस्योदाहरणस्थानानि बहूनि वेविद्यन्ते, किमिह बहुलेखनेन। सत्सङ्गस्यैतादृशो महिमा ये दुर्जना अपि ते सज्जना तस्करा अपि साधवः वञ्चका अप्युपकारकाः, प्रतारका अपि सुधारका जायन्ते। अतएव साधुसत्सगे सर्वैरेवावस्थेयमिति। सत् सङ्गतिः कथय किं न करोति पुंसाम्। सङ्गः सतां मङ्गलमातनोति।

## कुसंस्काराः ।

सर्वदेशीयेष्वशिक्षितेष्वेव कुसंस्कारा विद्यन्ते। तेषु भारतीयाः केचनैवं मन्यन्ते, अपत्यानां जन्मदिनतः षष्ठेऽहनि विधाता स्वयं सूतिकागृहमागत्य तेषां भाले जीवितकालस्य सकलं शुभाशुभं विलिखति। तदनुसारेण च नान्याजीवनं सुखदुःखे भुञ्जते किञ्चिदपि नूनं न भवति, अतः श्रमेण यत्नेन पुरुषार्थेन वा किं फलमिति।परमिदं कापुरुषवचनम्, जगति यावन्ति कृत्यानि

लघूनि महान्ति वा तानि समानि श्रममन्तरा कदापि न सिध्यन्ति। ये बालकाः पठने कृतश्रमास्त एव पण्डिता जायन्ते । ये त्वाकृतपरिश्रमास्ते धनिकद्वाराण्यटन्ति । आमरणं च सक्लेशं स्वजीवनमर्पयन्ति । उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः, दैवेन देयमिति कापुरुषा वदन्ति । अपि च भूमेश्छायापातेन चन्द्रमाः, चन्द्रमसश्छायापातेन दिवाकरश्चाव्रियते । किन्तु अत्र केचिदेवं भाषन्ते राहुनामकश्चाण्डालः सुधापानेन देवैर्द्विधा खण्डितेऽपि शरीरे जीवितो बभूव । तस्य मस्तकभागो राहुनाम्ना तदितरभागश्च केतुनाम्नाभिधीयते स एव नियमितकाले शशिनं भास्करं च ग्रसते, तदेव ग्रसनं चन्द्रसूर्ययोर्ग्रहणमित्याख्यायत इति।

अन्यच्च–अनेकेषामेवं निश्चयो विद्यते, यदस्माकं पूर्वपुरुषैरनुष्ठितं हितमहितं वा तदेवानुकृत्य यावच्छक्यं तावदस्माभिर्विधातव्यम्, नान्यत् किञ्चनेति । सर्वथा न सज्जनसम्मतोऽयं राद्धान्तः । यतः, हितकरं युक्तियुक्तं च कर्म कैरप्यनुष्ठितमनुष्ठितं वा तदेव करणीयम् । किन्तु दशभिरज्ञैः कृतमपि कदर्थितं कार्यं केनापि नानुष्ठेयमिति सार्वलौकिकोऽयं विधिः । युक्तियुक्तमुपादेयं वचनं बालकादपि । अन्यत्तृणमिव त्याज्यमप्युक्तं परमेष्ठिना । एवमपरे बहुविधाः कुसंस्कारा विद्यन्ते; तेऽप्यूहनीया विज्ञैर्बालैरिति ।

## सौजन्यम् ।

सुजनता हि मानवानामतीव शोभाविधायकं भूषणम् । पुष्पोद्गमनेन लता इव पल्लविताः । फलभारावनतास्तरवः इव शोभन्ते सुजनतालङ्कृता जनाः । सर्वे तानाद्रियन्ते । सुजनताया एवं महीयसी शक्तिरस्ति यत् केऽपि सज्जनान्न निन्दन्ति अपि तु तेषां पक्षपातिनो भवन्ति । किमपरं सर्वे-

एव तेष्वनुरज्यन्ति। कौशेयवस्त्रपरिधानम्, सौन्दर्यम्, देहपरिष्कृतिसाधुभाषया भाषणम् द्रविणं वा सौजन्यस्य लक्षणं न भवितुमर्हति। मयूराः शुकादयश्च पक्षिणोऽपि मनोहरवेषधारिणः सौन्दर्यशालिनश्च, पशूनामप्यनेके जिह्वया निजगात्राणि परिष्कुर्वन्ति। धूर्ता अपि भावगोपनार्थं साधुभाषया जनैः सह आलपन्ति लुण्ठनव्यवसायिनामपि प्रचुरं धनमस्ति। किमिमे सज्जना भवितुमर्हन्ति? सद्गुणा एव सौजन्यस्य निदानम्। मनसा वाचा कर्मणा परेषां हितानुष्ठानम्, स्वकीयोन्नतिसाधनम्, सत्यवादित्वम्, कारुण्यम् निरहङ्कारत्वम् सर्वदा धर्मवर्त्मनि विचरणञ्च सौजन्यस्य लक्षणम्। येषु नरेषु एते गुणा विद्यन्ते त एव प्रकृतसज्जनास्तैरेव मनुष्य पदवाच्यता लब्धा। सौजन्यं खलु भूषणं भुवि नृणाम्।

## चाटुकारिता।

चाटुवादः किल ज्ञानोन्नतेः कठिनमावरणम्। अप्रकृतस्तुतिवादेन यस्य सन्तोषो भवति, तस्यान्तःकरणे, अहं गुणवान् अहं ज्ञानवान्, अहं सर्वेषां श्लाघनीय इति महान् गर्वो जायते। गर्वान्धश्च भूत्वा स किमपि हिताहितं न विचारयति। सुतरां कदर्थिते कर्मणि रममाण सर्वदोषाणामाकरः सम्पद्यते। चाटुकारिणस्तु स्वप्रयोजनसिद्ध्यर्थमेव अपरानुच्चकैः स्तुवन्ति। एते यस्यान्तिकमुपयन्ति, कुरूपमपि तं कृष्णमाणिक्यमिति, मूर्खमपि तं पण्डित इति, दुर्बलमपि तं बलशालीति कल्पयन्ति। वस्तुतो ये गुणा यत्र स्वप्नेऽपि न दृश्यन्ते चाटवस्तत्र तान् नियोजयन्ति। अतएव चाटुकारिणां मोहकरवचनं सर्वेषामेवाश्रद्धेयम्। सर्वे स्वाभीष्टसिद्ध्यर्थं चाटुकाराः स्तुवन्ति हि।

## हिंसा।

कदापि किमपि निरपराधं प्राणिनं न हिंस्यात् 'अहिंसा परमो धर्मो हिंसा सर्वत्र गर्हिता, इति श्लोकमर्द्धमभ्यस्य सदैव

जिग्युः। सहायतायाः ईदृशी महीयसी शक्तिर्यत्क्षुद्राणि तृणानि सूत्राण्यपि परस्परं समवेतत्वे मत्तमातङ्गमवरुन्धन्ति। न पुनरेकैकं मशकमपि रोद्धुं शक्नोति। सर्वत्रैव विद्यमानान्यस्योदाहरणस्थानानीति विरम्यते।

## राजा राममोहनरायः।

शतोत्तरद्विचत्वारिंशद् वर्षाणि गतानि तदा बङ्गदेशे हुगलीमण्डलान्तर्गते कृष्णनगरसन्निधे राधानगरे बहुदेशविख्यातो राजा राममोहनरायः पवित्रब्रह्मकुले जन्म परिजग्राह। स महाभागः प्रभूतपरिश्रमेण नानाविधासु विद्यासु भाषासु चातीव कौशलं प्राप। तस्य समकाले तत्समः कश्चित् पण्डितो नासीत्। तस्य महानुभावस्य विविधासु विद्यासु पारदर्शितामवलोक्य भारतीया योरूपीयाश्च निरतिशयं विस्मयं प्रापुः। अनेन महाभागेन मतमतान्तरसम्बन्धीनि बहूनि पुस्तकानि विलोकितानि। पुनर्मूर्तिपूजां शास्त्रविरुद्धां विज्ञाय, एकं पुस्तकं प्रकाशितम्। अस्मिन् पुस्तके प्रदर्शितम् उपनिषत्सु वेदेषु च क्वापि मूर्तिपूजा न दृश्यते। इयं नवीना शैली प्रतिभाति। अनयेश्वरप्राप्तिः कदापि भवितुं न शक्या। सतीप्रथापि राजकीयनियमेनानेन महाभागेन दूरीकारिता। अनेन भारतभूषणेन भारतोद्धाराय बहूनि साधूनि कृत्यान्यनुष्ठितानि। परोपकाराय सतां विभूतयः॥

## ईश्वरचन्द्रविद्यासागरः।

ईश्वरचन्द्रस्य १२ आश्विने १८७६ विक्रमीयेऽब्दे मेदनीपुरमण्डलान्तर्गते वीरसिंहनाम्नि लघुग्रामे पुनीतब्रह्मवंशे जन्माभूत्। अस्य जनकस्य नामधेयं श्रीठाकुरदास इत्यासीत्। ईश्वरचन्द्रस्य जननी भगवती देवी सा महती दयावती, असंकीर्णहस्ता, बहुगुणाकरा, यावन्तोगुणा अस्मदीये चरितनायकेश्वर-

चन्द्रे समागतास्ते विश्वे मातुः पितुः सकाशादेव । अतएव शास्त्रे भणितम् । गुरूणां चैव सर्वेषां माता परमेको गुरुः । ईश्वरचन्द्रोऽपि स्वकीयस्य धर्मशीलस्य परिजनस्य प्रभावेण सत्यप्रियः स्पष्टवक्ता, निर्भीकः, स्वतन्त्रविचारः, अत्यन्तकारुणिकः, सरलप्रकृतिश्चासीत् । महात्माऽयं वाक्शूरो नाभूत् अपितु यथा वक्ता तथैव कर्त्ताप्यासीत् । अस्य महाशयस्य बालावस्थातीव दरिद्रा, बहूनि, दुःखान्यनुभूय महता क्लेशेन भूरिपरिश्रमेण गुरुप्रेम्णा च विद्यापारङ्गमोऽभूत् ।

आत्मनीनमध्ययनं समाप्य, अध्यापकपदवीमलञ्चकार । तत्र कालिकातासंस्कृतमहाविद्यालये बह्वर्थोन्यूनता दूरीकृता महाभागेन । शिक्षाविभागे स्थित्वा तत्रापि शोभनं कार्यं विहितम् वङ्गदेशे सामाजिकशोधने बहवो यत्ना विहिताः । सर्वत्र भारते वर्षे तदपि वङ्गविषये बाहुल्येन बालविवाहो जाजायते । अस्मिन् विषयेऽनेन महाभागेनानेके बालविवाहादिहानिकरा देश नाशकाश्च विचाराः शिक्षितसमुदायस्य सम्मुखे प्रकटीकृताः । अल्पवयस्कीयानां बालविधवानां पुनः संस्कारसमर्थनविषये युक्त्या शास्त्रप्रमाणेन चैकं पुस्तकं प्रकाशितम् । वङ्गप्रान्ते एकेतरा रीतिर्विकटरूपेण प्रसृतास्ति यां समाकर्ण्य रोमहर्षो जायते । एकः कुलीनो भूदेव आचत्वारिंशत् कन्यकाभिः सहोद्वाहं कर्त्तुं समर्थः, कैश्चिन्महात्मभिस्तु स्वीकीयोऽयं व्यवसायो निश्चयीकृतः । इदं कुकृत्यं समवीक्ष्य विद्यासागरो भृशं विशीदति स्म । अस्मिन् विषये शिक्षितमानवानां सहस्त्रात्परमेकं निवेदनपत्रं भारतराजराजेश्वरसविधे समर्पितम् ।

अनेन महेच्छेन अनेकानि पुस्तकानि संस्कृते वङ्गभाषायां च विरचितानि सन्ति । धन्ये भारतावने ! त्वयीदृशानि रत्नानि जायन्ते । तस्यैव जन्म साफल्यं यस्य कीर्तिश्च निर्मला ।

दृश्यते तस्यैव महात्मन उपदेशस्य फलम् । इतिहासज्ञा जानन्त्येव स्वामिदयानन्दस्य प्रागस्य देशस्य कीदृशी दशासीत् । कियत्यः समित्य आसन् ? किं ऋषिकुलगुरुकुलान्यभवन् ? किमियन्ति समाचारपत्राणि निःसरन्ति स्म ? नगरे नगरे ग्रामे ग्रामे ये शोधनविचाराः सञ्जातास्ते तस्यैव भारतसुपुत्रस्वामिदयानन्दस्य पुनरुद्भाविताः सन्ति ।

## इतिहासः ।

* इदं सत्यमितिहासो नाम बहिश्चराः प्राणः । देशस्य समाजस्य चेतिहास एव यस्य कस्यापि वा देशस्य समाजस्य च महिमानं प्रथयति परोक्षीभूतानप्यात्मगुणान् प्रकाशयति पूर्वजकीर्तिगाथां कीर्त्तयन्नादधाति किमपि बलम् । पूर्वजानामाचारविद्यानीतिप्रतिष्ठाः प्रकाशयन्नितिहासः पथश्च्युतमपि पुनः पन्थानमारोपयति जनम् ।

पूर्वजानां को धर्मः, क आचाराः, के विचारा कीदृशी नीतिः किं ज्ञानम्, का विद्या, किं कुलम्, कीदृशं बलम्, कीदृशं जीवनम्, किमवलम्बनम्, का प्रथा इत्यादयो विषया इतिहासेनैवावगम्यन्ते । अस्माकीनाः पूर्वजा उन्नता अवनता वेतिहासत एव स्फुरति मानवेषु । इतिहासज्ञानशून्यः समाजः पुरः स्थितमपि कर्त्तव्यम्, पश्यन्नपि न पश्यति, अन्तः शून्य इव प्रतिबोधितोऽपि न बोबुध्यते, खञ्ज इव गन्तुं प्रवर्त्तितोऽपि न पुरश्चलति, बधिर इवोपदेशान् नो शृणोति, इन्द्रियविकलः स्थाणुरिव, विवेकरहितपशुरिव चतुरशिल्पिप्रवर्त्तितं यन्त्र चेतिहासज्ञानविरहितः समाजो निष्प्रभस्तिष्ठति, सूत्रनिबद्धापुत्तलिकेव सञ्जायते । अतो बहिश्चराः प्राणा इतिहासो नाम समाजस्येति युक्तमुक्तं भवति ।

---

* शारदातः ।

# भारतवर्षम् ।

अहो! कालादिदं भारतं कामपि सुखासिकामविशल्यान्यै-र्विद्वद्भिर्महता श्रमेणाविष्कृतानां विद्युत्तत्त्वादीनां सम्पातभया-दिव नोन्मीलयति विलोचनयुगलमद्यापि न चेष्टते, नापिविचि-न्तयति, न च किञ्चिदनुतिष्ठति । निद्राप्रबलतयान्धस्तमसि निमग्नसत्करतलगमपि विज्ञानं नानुशीलयति, केवलं निःसारैः वाह्याडम्बरैर्मुधाकालमतिवाहयदिदमद्यापितिष्ठति । प्रत्यग्र्यं निवापाञ्जलिं प्रत्यात्मगौरवाय, विस्मृत्य ताः सकला कलाः, अपहाय नवनवाविद्याः कुम्भकरणनिद्रामवलम्ब्य साम्प्रतं तिष्ठति। पुरा यस्या दिव्यगिरो विश्वजनीनः प्रचार आसीत् । अत्रत्या विद्वांसः दर्शनगणितेतिहासादिविषयकान् ग्रन्थान् विरच्य मानवानां हार्दमन्धं तमोदूरमुत्सार्य सर्वविद्याचार्या जगत् विज्ञानप्रसविनीमार्यविद्यां कल्पलतिकामिव समीहितसिद्धदां मानवस्य जगन्मण्डले प्रकाशितवन्तः। हन्त भोः कालवशादस्म-त्कर्मविपर्यासाद्वा तामेव ह्सीयसीं दशामधिगच्छन्तं विलोक्य किन्न दूयते अस्माकं चेतः? साम्प्रतं भारतीयानां क्व तत्सकला-कलाभिज्ञत्वं क तावज्ज्ञानपाटवम् , क्वा सा विवेकता,क्व तावत् गौरवम् , क्व तावज्जगन्मान्याया विद्याया उपदेष्टृत्वम् , क्व वा ते प्रयत्नैः प्रणीतपूर्वा गभीरर्थाः प्रबन्धाः क्व दिव्यगिरस्तादृशः प्रचारः, हा हन्त ! सर्वं तदेक पद एव विलुप्यते स्म । पूर्वविप-श्चितः शिल्पे, कलायाम् , धर्मशास्त्रे, निरुक्ते पदे, वाक्ये, प्रमाणे, अन्वीक्षिक्यां मीमांसायाम् , अर्थशास्त्रे, ज्यौतिषे, आयुर्वेदे, धनुर्वेदे, सङ्गीते, न्याये, साहित्ये, भूमिरत्नपरीक्षायाम् , तन्त्रे, रसायने, कल्पे, पदार्थनिधायाम् , पुराणे, दुर्गनिर्माणे तादृशान् प्रबन्धान् व्यरचन्त, येऽद्यापि तेषां कीर्त्तिमुद्घोषयन्ति द्वीपा-न्तरेषु । परं करतलगतं हीरकखण्डितमिव साम्प्रतं ते प्रब-

न्था नाद्रियन्ते भारतीयैरिति विलोक्य प्रेक्षावन्तो मनसि विषीदन्ति ।

## मनुष्यता ।

मनुष्ययोनिमुपलभ्यापि मनुष्यत्वस्य ज्ञानं काठिन्यं विद्यते । धनमुपार्ज्य कुटुम्बपालनेन आहोस्विदधिकधनसम्पत्तेः स्वामी भूत्वा आमोदप्रमोदेन स्वजीवननिर्वाहकरणेनैव कश्चिन्मनुजपदभाङ्नो भवितुमर्हति । अनेकेषां शास्त्राणामप्यध्ययनेन कश्चिन्मनुष्यतां न प्रयाति । मनुष्यत्वस्य लक्षणं केवलं धनिकत्वं पाण्डित्यं च नास्ति । यद्येवं स्यात्तर्हि लोके जना धनाढ्यानां शास्त्रज्ञानां विद्याविशारदानां पशुसंज्ञां संगृह्य कथं तिरस्कुर्वन्ति तान् । भाषन्ते च मानवाः केवलं विद्याध्ययनेनैव कश्चिन्मानपदवीं नालं कर्तुमर्हति । अनेनेदं बोद्धव्यं धनसम्पत्त्या विद्यया च मनुष्यत्वं नाममात्रं विद्यते । मनुष्यत्वमेकमन्यद्वस्त्वस्ति । आत्मना सह मनुष्यत्वस्य घनिष्ठसम्बन्धोऽस्ति । य आत्मसंयमिनो भवन्ति त एव मनुष्यतां प्राप्नुवन्ति । आत्मसंयम आत्मत्यागश्चोभाविमौ मनुष्यताप्राप्तये प्रधानगुणौ स्तः इन्द्रियाणां मनसश्च स्वाधिकारे रक्षणमात्मसंयमः । परोपकाराय सुखदुःखस्य न परिगणनमात्मविसर्जनमस्ति । कामक्रोधलोभमोहमदमत्सरा इमे षड् मनः शत्रवो विद्यन्ते । केवलमेषामारोधस्य नामात्मसंयमो नास्ति अपित्वेभिः सह पञ्चेन्द्रियाणां निग्रहणमात्मसंयमस्य लक्ष्मास्ति ।

धनं न याचे नच राजशासनं, याचे प्रभो ! शुद्धपवित्रजीवनम् ।
अधर्मकृत्येषु मतिर्मदीया, विकुण्ठिता स्यान्नतु धर्मकर्मसु ॥१॥
धनाधिपेऽहं विनयी भवेयम् , विपत्तिकाले धृतिमान् गभीरः ।
याचे विभो ! निर्मलचालधिष्णाम् ,प्रपञ्चरहितां शुभकामनां सदा

शान्तं मनो मे सकलेन्द्रियाणि, वश्यानि यायान्तु सदा परेश ! ।
उदारभावस्य च वर्तनं मे, दधातु सकलेश ! सदा महेश !॥३॥
लोकस्थितां मानवजातिसर्वाम् , पश्याम्यहं सौहृदलोचनेन ।
भवन्तमावीक्ष्य बिभेमि पापात् , न पापकृत्येषु भवेत् प्रवृत्तिः॥

## प्रेम ।

स्नेहेन विना कश्चिदपि परोपकारकर्मकरणे न प्रवर्तते। निरपेक्षकर्मकरणमेव तथ्यमौदार्यं विद्यते। इदं निश्चित्योपकार-कर्मकरणम् , यस्याहमुपकारं कुर्वे, अयं यथाकालं ममोपकारं करिष्यति, एवं करणं परोपकारोऽनास्ति अपि तु स्वोपकारोऽस्ति। इत्थं भूतानां कर्मणां करणं वणिग्वृत्तिः सञ्ज्ञा भवितुमर्हति।

निष्कामकर्मकरणे हृदयेऽलौकिकानन्द उत्पद्यते, परन्तु सकामकर्मकरणे स आनन्दो हृदये नोत्पद्यते । अनुरागे एवायं संसारः सन्तिष्ठते। अस्यानुरागस्यानेके पर्यायवाचकाः शब्दाः सन्ति। यथा स्नेहः, हार्दम् , श्रद्धा, प्रणयः, प्रेम, भक्तिः—इत्यादयः। अयमनुरागः सन्ततिषु गुरुषु बन्धुबान्धवेषु पतिपत्नीषु जनकजननीषु परमपितरि विधातरि च जीवानां विद्यते। प्रेम्णोदयाभावो जायते। तदैव मनसि मालीन्यम् , ईर्ष्याद्वेषौ शात्रवं च जाजायते। मानवानां हृदयेषु प्रेमैव जीवनसुखं प्रफुल्लताया भावं च प्रकटयति। स्नेहो बध्नाति संसारम् ।

## दया ।

यस्य जनस्य हृदये दया न विराजते स मनुष्यसमाजे स्थातुमनर्हः। अन्येषां दुःखान्यपहरणाय यस्य चित्तवृत्तयो न प्रवर्तन्ते, इतरेषां लोचनेभ्योऽश्रुणि स्रवन्ति समवीक्ष्य यस्य नयने सजले न जायेते अन्येषां विपदं दृष्ट्वा यस्य स्वान्तं न

विदूयते, ईदृशात् स्वार्थपरायणात् समाजकण्टकाज्जनाद् याव-च्छक्यं तावद्दूरं स्थेयम् ।

केचनेदृशा ज्ञानगर्विष्ठा वृथाभिमानिनो मानवाः सन्ति ये च देशं कालं पात्रं चाविचार्य सौजन्यं दर्शयन्ति । ईदृशानां दया-लूनां लोके निन्दा जायते । तेषां निर्मलचरित्रे पवित्रे नाम्नि च कलङ्कत्वं प्रयाति, तेषामुन्नतं मस्तकमधः प्रयाति, तेषां हृदि अशान्तिदेवी स्वीयं निकेतनं च विरचयति ।

ये देशं कालं पात्रं च विचार्य कारुण्यं सौजन्यं च दर्शयन्ति तेऽस्माद् भयात्सर्वदा शङ्कन्ते. अस्मदीया कदापि पश्चान्निन्दा न जायेत । अस्मदीये निर्मलचरित्रे पवित्रकीर्त्तौ च कुत्रचिदपयशो न भवेत् । आस्माकीनमुन्नतं मस्तकं कुत्रचिन्नीचैर्न गच्छेत् । ईदृशो मानवा यत् किञ्चित् कुर्वन्ति तत्सर्वं यशसे विदधाति नापकीर्त्तये । सदा सर्वेषु भूतेषु दयां कुर्वन्ति साधवः ।

## आदर्शपुरुषाः

यस्मिन् देशे आदर्शपुरुषा जायन्ते तथैव तस्य देशस्योन्नति-र्भवति । महापुरुषाणामादर्शस्वरूपाणां जीवनचरितानामवलो-कनेन तथैव तत्रत्यानां मानवानां जीवनानि परिवर्तन्ते यत्रादर्श-पुरुषा उच्चहृदया जायन्ते तदा तत्रत्या मानवा अप्युच्चहृदया यदादर्शपुरुषाः संकीर्णहृदया भवन्ति तर्हि तत्रत्या जातिर-वनतिं प्रेति ।

अतएव भिन्नदेशनिवासिनां शिक्षा सभ्यताभावः कल्पना-बुद्धिर्मानसिकभावना संस्काराश्चभिन्नप्रकारा भवन्ति । भूवलये नास्तीदृशः कश्चिदपि देशो यः सामाजिकेषु राजनैतिकेषु सांसा-रिकेषु पारमार्थिकेषु दैहिकेषु मानसिकेषु सर्वेषु च विषयेषु सर्वोच्चादर्शः स्यात् । कुत्रचिन्मानसिकोन्नतिः, कुत्रचिच्छारीरि-कोन्नतिः, कुत्रचिन्मनोविज्ञानोन्नतिः, कुत्रचिज्जडविज्ञानोन्न-

तिश्च विशेषरूपेण विद्यते । अत एव देशं कालं च विचार्य्य, यस्मिन् काले यस्मिन् देशे ये सर्वोच्चाः सर्वमान्या आदर्शाः पुरुषाः स्युः, तेषां प्रशस्तगुणानां ग्रहणं सर्वथोचितमस्तीति । आदर्शपुरुषस्य जीवनं सर्वत्र सर्वं सुखयति ।

## विनयः ।

एकस्य दार्शनिकस्य विदुषो महात्मनो राद्धान्तोऽस्ति । अहङ्कारवतो मर्त्यस्याऽऽननं भयङ्करं प्रतिभाति । अहंकारः शात्रवमुत्पादयति, ईर्ष्यां वर्धयति, संसारस्थां सरणिं कण्टकाकीर्णां विदधाति । परं विनयः शत्रुं मित्रं विरचयति, ईर्ष्यासर्पिण्याः सविषान्दन्तान् खण्डयति, संसारस्थान्कठिनकठिनान् मार्गानपि पुष्पशय्यावत् कोमलान् विदधाति । विनयः कियतो महत्वस्य वस्त्वस्ति । परमल्पबुद्धयो मानवा इदं न बोधन्ते । अल्पविद्योमहागर्वी जायते अहङ्कारस्य याथार्थ्येन वैरुद्ध्यं विनयोऽस्ति । अहङ्कारो दोषो विद्यते विनयश्च गुणोऽस्ति । सर्वे मानवा गुणस्य पक्षपातिनो भवन्ति । अतएवाहङ्कारं द्रष्टुमसमर्था विनयं दृष्ट्वा च प्रसीदन्ति विनयोयथा स्वगुणेन वैरिणं मित्रं विरचयति एवमेवाऽहङ्कारोऽपि सुहृदमरिं विदधाति, अरातिसंख्यां च वर्धयति । यथा सौजन्यं विनीतिर्मधुरभाषणं च परस्परं सम्बन्धं रक्षन्ति, एवमेवाशिष्टता कटुभाषणमहंकारश्च परस्परं सहानुभूतिं रक्षन्ति । विनयिनो मनुष्या समस्तेषु कार्येषु साफल्यमाप्नुवन्ति, अविनयिनो नैष्फल्यम् ये पुरुषा उद्दण्डा उद्धताः सन्ति, तेषामेकमपि कार्यं साफल्यं न प्राप्नोति । आसां सर्वासां वार्तानां सत्यापनाय कस्यचित्प्रमाणस्यावश्यकता ना विद्यते । विनयस्याऽविनयस्य च फलाफलस्य घटना प्रतिदिनं जाजायते । अनेनैव प्रमाणेन पूर्वकथितानां वार्त्तानां सत्यापनाय प्रमाणी कर्त्तुमर्हन्ति । यद्यस्मिन् विषये कश्चित् सन्देहः स्यात्तर्हि युष्माभिः स्वयं परीक्षणं विधेयम् । विनयिनां

मानवानां मानुजाः स्वयमेवाधीनतामुपयन्ति, अहङ्कारिभ्यो-ऽधीभूत्वा दूरं प्रयान्ति। भो बाला! यदि यूयं स्वकीयां विमलां सुकीर्त्तिं संसारे विस्तारयितुं कामयध्वे तर्हि विनयिनो मधुरा-लापिनो निरभिमानिनश्च भवेत। अन्योगुणो नो विनयेन तुल्यः

## परिहासः।

कस्यां वेलायां केन सह कया रीत्योपहासो विधेयः। अस्मिन् विषये मीमांसावश्यमेव करणीया। परिहासस्य मूलकारणम् मोदप्रियता विद्यते। उपहासकरणस्य कारणं केवलं चित्तप्रहर्षणम्, नान्यः कश्चिद्धेतुः। परमयुक्तरीत्या परिहासेन हर्षविनिमये विषादो जायते तेन हास्येन को लाभः येनान्यस्य हृदयं विद्रूयेत। कैश्चिन्मानवैरयुक्तं परिहासं कृत्वात्मनीनः प्राणाः अपिपरित्यक्ताः। अतएवास्मिन् विषये सर्वैः प्रबोधेन भाव्यम्। ईदृशः परिहासः केनापि सह न कर्त्तव्यो येन तस्य परिणामो भयावहः स्यात्। हास्यं तावदेव कार्यं यावत्तस्य फलं लाभप्रदं स्यात्। हास्येन यदान्यस्य चेतसि वेदना जायेत तदा तद्धास्यं न अपितु तद्धास्यमीर्ष्याद्वेषरूपेणानिष्टमुत्पादयति। अवद्यरीत्या परिहासेन परस्परमसमञ्जसः सञ्जायते एवं करणेनोभयोर-मङ्गलमेव। असभ्यतयाऽश्लीलवार्ताभिश्च सभ्यैर्जनैः परिहसनं सर्वथा परिहेयमस्ति। कुत एवं परिहासेनासन्तोषो वर्धते! ये शिष्टाः सज्जना भवन्ति तेऽनुचितपरिहासकर्तृभिः सह सम्भाषणकरणमुचितं नो मन्यन्ते। सभ्यसमाजे दुर्बोधाः परिहासकाः कदापि सम्मानं न लभन्ते। परिहासो दुःखदो भवति।

## मधुरभाषणम्।

मधुरभाषणे न जाने कीदृशी विचित्रा शक्तिर्विद्यते, यया मानवा असाध्यं गतानि कार्याणि साध्यं कल्पयन्ति निसर्गतो-मनोज्ञानि वस्तूनीतरेषां हृदयान्यात्मसात् कुर्वन्ति। वीभत्सानि

वस्तूनि स्वभावतो घृणामावहन्ति । मधुरवचनेष्वीदृशी विल-
क्षणाशक्तिर्विराजते या जनानां चेतांस्याहरति, मधुरवचांसि
निर्दयिनां हृदयेषु दयामुद्भावयन्ति, निष्ठुरस्वभावानां मानवानां
मनांसि मृदुलानि सञ्जायन्ते। शत्रवोऽपि मित्रयन्ते । मधुर-
स्वरतरङ्गाः किन्न कर्तुमर्हन्ति ? कालस्वरूपः कृष्णसर्पोऽपि म-
धुरस्वरेणमोहमुपागत्यात्मनीनं व्यापारं विस्मरति, वीणामधुर-
ध्वनिना वन्यपशुपक्षिणोऽपि वश्या भवन्ति, मनुष्यविषये तु
किमपि विशेषं वक्तव्यं न विद्यते स त्वात्मानमपि विस्मरति ।
मधुरभाषणस्य महिमा सङ्गीतविधानान्न्यूनो न विद्यते । मधुर-
शब्दः कर्णकुहरं प्रविश्य मानवानां हृदयानि द्रवयति । यद्येषा-
मृतवाणी विनयेन सह व्यवहारमाप्नुयात्तर्हि सुवर्णेनसह सुगंधे-
मेलनं स्यात् कठोरभाषणेन वयं मुहुर्मुहुः क्लेशं लभामहे, इदं
बुद्ध्वापि मधुरभाषणं न वयं शिक्षामहे । मधुरभाषणाय धन-
व्ययकरणस्यावश्यकता न विद्यते। अपितु यत्कार्यं बहुधनव्य-
येन न सिध्यति तन्मधुरभाषणेन चपलं सिद्धिं याति । ये मधु-
रालापिनो ये च तच्छ्रोतारः समे इमे मोदन्ते, मनसि पवित्र-
भावानामुदयो भवति, मधुरालापिनो विश्वेषां मानवानां प्रेम-
पात्राणि जायन्ते यत्र मधुरालापो भवति, तत्रत्यो वायुर्मधुर-
मयो जायते। मधुरवचनश्रवणेन श्रोतॄणां दुःखानि शोका मोहा-
विषादाश्च विस्मृतपथं प्रयान्ति । येषां हृदि स्नेहो दया च
विद्यते तेषामाननात् प्रायेण मधुरवचनानि निर्गच्छन्ति, प्रेम-
दया चैव मधुरालापस्याकरः। ये मानवाः प्रेमका दयालवश्च
सन्ति त एव मधुरालापिनो भवन्ति ।

## उत्साहः ।

दृढप्रतिज्ञयाऽध्यवसायेनाऽऽत्मवश्यतयोद्योगेन च सिंहेन
नरेण किं न कर्तुं शक्यते ? बाला ! यदा यूयं मनो नियोज्य

सततं कार्यं करिष्यथ तर्हि यत्कार्यमद्य पर्वताकारं प्रतिभाति तदेवकार्यं कालान्तरेण स्वल्पशिलावत् प्रतिभास्यति । मुग्ध-बोधव्याकरणस्य रचयिता प्रसिद्धवैयाकरणो वोपदेवो बाल्य-काले महान्मन्दबुद्धिरासीत् । अश्रान्तपरिश्रमेणापि पठितपाठः स्मृतिपथं न प्रेति स्म । परं विनीतभावाद् गुरुदेवस्य कृपापात्र-मासीत् । वोपदेवेन महता परिश्रमेणाऽलघुप्रयत्नेन बहुकाल-पर्यन्तं व्याकरणमधीतं परं बोधनं किञ्चिदपि नाभूत् । अनेन हेतुनाऽध्यापकाध्येतारावुभावपिसंक्षुब्धावास्ताम् । एकस्मिन्न-हन्यध्यापनकालेऽध्यापकेन वोपदेवस्य मधुरालापेन तिरस्कारो-ऽकारि । अनेन तिरस्कारेण स लज्जितो भूत्वा तूष्णीं पाठशाला-न्निर्जगाम । उदासीनभावेनेतस्ततः परिबभ्राम । एकदा गमन-श्रमेण परिश्रान्तो भूत्वा सरोवरस्य सविधे वृक्षच्छायायां विश-श्राम । तत्र सरोवरे मृद्घटं समादायैकः युवतिः स्नानार्थं समागतवती । जलेन घटं प्रपूर्य, पाषाणनिचये घट्टे घटं निधाय कासारे स्नानमकार्षीत् । सा स्नात्वा घटमादायात्मनीनं सद्म वव्राज । यत्र तया घटो रक्षितस्तत्र सततं घटरक्षणेन गर्त्तः समजनि । इदं संवीक्ष्य वोपदेवस्य हृदि नवीनविचाराः समज-निषत । तेन मनसि चिरं विचारितं गुरुगृहगमनम् । गुरुणा सहर्षस्य पुनरागमनस्य कारणमप्राच्छि । वोपदेवेन घटसंघ-र्षणगर्त्तकथा श्राविताऽनेन शिक्षापि गृहीता । यदा मृद्घट-संघर्षणेनाश्मनि रन्ध्रं संजायते तर्हि किं मे बुद्धिः स्मरणशक्तिश्च तीव्रा नो भविष्यति ? । तस्माद् दिवसाद् वोपदेवेन महता श्रमेणाध्ययनस्य कार्यमारब्धम् । स्तोकेन कालेन स महावैया-करणोऽभूत्, तेन मुग्धबोधनामकं व्याकरणं व्यरचि । अस्य व्याकरणस्य बङ्गदेशे बाहुल्येन प्रचारोऽस्ति । अत एव कविराह, यत्ने कृते यदि न सिध्यति कोऽत्र दोषः, अस्येदमेवास्य तात्पर्यं यत्ने दोषः विचारणीयो नच दैवे ।

# भगवद्भक्तिः ।

श्रेयः करां भक्तिमुदस्यते विभो! क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम्॥

हे नाथ ! ये मानवा भावत्कीं कल्याणकारिणीं भक्तिं विहाय केवलज्ञानप्राप्तये क्लिश्यन्ति, ते क्लेशमन्तराऽन्यत्किमपि न लभन्ते । यथा तण्डुलविरहिततुषावघातनेन दुःखं विना नान्यत् किमपि लभ्यते। एवमेव भक्तिं विरह्य केवलज्ञानप्राप्तिर्न सुखकरी।

विचारशीलमानवैः केवलां विद्यामधीत्य न सन्तोष्टव्यम्, अपितु भगवद्भक्त्या स्वजीवनं पवित्रीकरणीयम् । कश्चन नरो विद्यापारङ्गतो बहुदर्शी स्यात्तथापि नैतिकबलस्य सच्चरित्रस्य चाऽभावेन स सभ्यसमाजे न गण्यते मनुजैः । यदा यस्य हृदये कुवृत्तयो बाहुल्येन स्थानं लभन्ते तदा तस्य बुद्धिः साहाय्यं न करोति । ये नैतिकबलात्प्रच्युताः सन्ति तैर्धार्मिकजीवनाय बुद्धिबलस्य विश्वासो न विधेयः । नैतिकबलहीनवृत्तयो बुद्धिमन्तोऽपि नराः कर्त्तव्यविमुखा अकर्त्तव्यपरायणाश्च जायन्ते या शक्तिः नैतिकबले विद्यते सा बुद्धौ न, बुद्धिः केवला मार्गदर्शिकास्ति, पथिकजनो ज्ञात्वापि मार्गच्युतः स्यात्तदास्योत्तरदायिनी बुद्धिर्नास्ति । परन्तु नैतिकबलं कर्त्तव्यकर्माणि नहि विचालयति नरम् । यथा बुद्ध्या सह नैतिकबलस्याल्पसम्बन्धोऽस्ति तथैव विद्यया सह स्तोकसम्बन्धोऽस्ति यद्येवं न स्यात्तर्हि ये मानवा उच्चशिक्षासम्पन्ना विपश्चितः साहित्यसंसारालङ्कारा भूत्वा जगति विख्याताः सन्ति, तेषु कश्चिन्मद्यपः कश्चिदपव्ययी, कश्चिद्दुराचारी, कश्चित्तस्करः, कश्चिन्नास्तिकः, कश्चिद्देशशत्रुः कथं स्यात् ? । तेषां सा विशालविद्या प्रतिभा तथा मेधा पापपथात्कथं न तान्निवारयति ? अतएव बाल्यकाले धर्मशिक्षाया महत्यावश्यकता वरीवृतीति । ये बालावस्थायां

धर्मनीतिशिक्षया न शिक्षन्ते त एव दुश्चरित्राः भूत्वा स्वकीयं वंशं देशं च कलङ्कयन्ति । शिक्षाया मुख्यं तात्पर्य्यं बालानां दुश्चरित्रात् त्राणमेव ।

अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतोहतः ॥

—०—

## पाणिनिव्याकरणम् ।

इह किल भारते वर्षे सकलशास्त्राणां प्रचारे सत्यपि वेदाङ्गेषु प्रधानमिति व्याकरणम् । तच्च व्याकरणं शाकटायनापिशलिगार्ग्यगालवस्फोटायनप्रभृतिभिः प्रणीतमासीत् । परन्तु कालक्रमेण तत्सर्वं तिरोहितमेव प्रतिभाति साम्प्रतम् । महर्षिणा पाणिना तेषां वैयाकरणानां मतमाकृष्य लौकिकानां वैदिकानामपि शब्दानामनुशासनं च सङ्कमय्य सर्वोपयोगिपरमरमणीयं सर्वोत्तममेतद् व्याकरणं निरमायि । एतस्यैव व्याकरणस्य तावद् वर्त्तन्ते सूत्रपाठो गणपाठो धातुपाठो लिङ्गानुशासनं चेति चत्वारो विभागाः, अस्य व्याकरणस्योपरि वार्त्तिककारः कात्यायनोऽभूत् । भाष्यकारश्च पतञ्जलिर्मुनिरासीत् अतएव युक्तमुक्तं भवति त्रिमुनि व्याकरणम् ।

वस्तुगत्या व्याकरणमन्तरा शब्दज्ञानं बहुदुस्तरतमम् । अतएव महामुनिना पतञ्जलिना महाभाष्ये इदमुक्तम् । न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः, ते चाऽवश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः । तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्मादध्येयं व्याकरणमिति ।

## चाणक्यः ।

पञ्चाम्बुप्रदेशस्य कस्मिंश्चिद् ग्रामे चणिनामकः कश्चिद् विप्रः प्रतिवसति स्म । तद् भार्याऽपि संयोगवशात् चणिनाम्ना

प्रसिद्धा संजाता । समयमासाद्य चणिर्गर्भमधत्त । दशमे मासि चणिः पुत्रमसूत । प्रसवाऽनन्तरमेवोद्भिन्नरदनावलिः पुत्रः समजनि । माता चाऽलौकिकीमवस्थां पुत्रस्याऽवलोक्य चिन्ताक्रान्तानिष्टं शङ्कमाना तनयमादाय ज्योतिर्विदां जैनमुनीनां च सन्निधौ भाविफलजिज्ञासया जगाम । पृष्टाश्च मुनयः। ते बभाषिरे। देवि! समुत्पन्नदन्तस्यास्यऽतनयस्य निजपराक्रमतो राज्यलाभ एव फलम् । सा च देवी राज्यसम्पत्तिमनर्थपरम्पराकुलां विचिन्त्य कथमपि हृदयमाश्वासयन्ती बालस्य दन्तान् संजघर्ष । पुनश्च दैववशात्ते ज्योतिर्विदो भूयोऽपि तद् गृहमाजग्मुः । तं चणीसुतं घृष्टदन्तमवलोक्य व्याजह्रुः । अहो राज्यसम्पत्तिस्त्वस्य विलीना तथाप्यस्यैवात्मा शरीरान्तरेण राज्यं भोक्ष्यते । तस्या एव पुत्रश्चाणक्यनाम्ना प्रसिद्धः । स्वगृह एव स बाल्यं नीतवानधीतवांश्च ।

समारूढयौवनो गृहीतपान्थवेशो गृहाच्चाणक्यो निर्जगाम । दैववशाद् गच्छन् मार्गे चाणक्य इभग्रामं प्राप । तत्र च कस्यापि हस्तिपकाध्यक्षस्य पत्न्या गर्भः स्थिरः, सा प्रसवं न लेभे । तत्पतिः परिव्राजकवेशं चाणक्यं विलोक्य तं प्रार्थितवान् । तत्प्रार्थितश्च चाणक्य औषधविशेषं चकार बभाषे च । अस्माद् गर्भाज्जायमानः पुत्रो मह्यं प्रदेयः, अहमेवैनं शिक्षयिष्यामि, इत्युक्त्वा ततो निर्जगाम । बहुदिनानि यावदितस्ततः परिभ्रमन् पुनस्तमेव ग्रामं चाणक्यः आससाद । तत्र समुत्तीर्णबालभावं ग्राम्यक्रीडासक्तं बालकमेकं ददर्श । बालकदर्शनसमकालमेव विस्मृतमपि पूर्ववृत्तान्तं चाणक्यः स्मृतवान् ।राजन्निति तं संबोध्य चाणक्यो भिक्षां ययाचे । स बालोऽपि क्रीडामहाराजोऽहं भावप्रगुणो यथेच्छं सर्वमेव गृह्यतामित्यादिदेश । मत्प्रदत्तेनौषधेनाऽयं समुत्पन्न इति । लक्षणविशेषैर्विज्ञाय तन्मातरं ययाचे । माताऽपि पूर्वप्रतिज्ञानुसारेण बालं तस्मै ददौ । सोऽपि चाणक्यो बालमुप-

सविस्तरमुवाच । तात ! चन्द्रापीड ! विदितवेदितव्यस्याऽधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं च निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो लक्ष्मीमदः । विषमो विषयविषास्वादमोहः । नित्यमस्नानशौचवध्यो रागमलावलेपः । घोरा च राज्यसुखनिद्रा भवतीति विस्तरेणाऽभिधीयसे । गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थपरम्परा सर्वा । अविनयानामेकैकमप्येषामायतनं किमुत समवायः । यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । भवादृशा एव भवन्ति भाजनान्युपदेशानाम् । अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखे नोपदेशगुणाः । अयमेव चाऽनास्वादितविषयरसस्य ते काल उपदेशस्य । गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानम् । विशेषेण राज्ञाम् । विरला हि तेषामुपदेष्टारः ।

आलोकयतु तावत् कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् । इयं हि लक्ष्मीः क्षीरसागरात् पारिजातपल्लवेभ्यो रागमिन्दुशकलादेकान्तवक्रतामुच्चैः श्रवसश्चञ्चलतां कालकूटान्मोहनशक्तिं मदिराया मदं कौस्तुभमणेर्नैष्ठुर्यमित्येतानि सहवास परिचयवशाद् विरहविनोदचिह्नानि गृहीत्वैवोद्गता । इयमनार्या लब्धाऽपि खलु दुःखेन परिपाल्यते । परिपालितापि प्रपलायते । न परिचयं रक्षति । नाभिजनमीक्षते । न रूपमालोकयते । न कुलक्रममनुवर्तते न शीलं पश्यति । न वैदग्ध्यं गणयति । न श्रुतमाकर्णयति । न धर्ममनुरुध्यते । न त्यागमाद्रियते । न विशेषज्ञतां विचारयति । नाचारं पालयति । तदस्मिन् महामोहकारिणि यौवने कुमार ! तथा प्रयतेथा यथा नोपहास्यसे जनैः न निन्द्यसे साधुभिर्न धिक् क्रियसे गुरुभिर्नोपालभ्यसे सुहृद्भिर्न

शोध्यसे विद्वद्भिः। कामं भवान् प्रकृत्यैव धीरः पित्रा च समारोपितसंस्कारः। तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि तथापि भवद्गुणसन्तोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खली करोति लक्ष्मीरिति। सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान् नवयौवनराज्याभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय स्वबन्धुवर्गम्। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन् विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुन्धराम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति। इत्येतदभिधायोपशशाम।

## मातृभूमिवन्दना।

अयि देवि! मातृभूमे! मम हार्दिकं नमस्ते।
प्रभुरस्मि नैव गातुं मातर्महन्महस्ते ॥ १ ॥
धन्या न काचिदन्या हृदयेऽस्ति मे त्वदन्या।
मान्याऽपि हे वदान्ये! जगतीतले समस्ते ॥ २ ॥
विपुलश्रियां निधानं तनुभृन्मुदां विधानम्।
जयताद् भुवां प्रधानं भुवि मञ्जुलं वपुस्ते ॥ ३ ॥
मृत्स्नाऽपि सा त्वदीया कृत्स्नां शुचं मदीयाम्।
अपहृत्य मोदनीयां तनुते मुदं प्रशस्ते ॥ ४ ॥
भक्तिर्विपत्कराला तव जन्मभूः! विशाला।
हृदये ममास्तु मालामञ्जवञ्जनं रजस्ते ॥ ५ ॥
अन्तर्विलोचनाभ्यां द्युतिशोर्विरोचनाभ्याम्।
जानीहि सत्यमाभ्यां लेलिह्यते तनुस्ते ॥ ६ ॥
मातः! प्रलीनशोके वपुषः श्रियं सुलोके।
ललितां यदा विलोके लसतीव मे मनस्ते ॥ ७ ॥

सहवासिनस्तवाऽमी सुचिराय जागरूकाः ।
गतसंज्ञमालुठन्तं प्रहसन्त्यहो भवन्तम् ॥ ५ ॥
अहिफेनफेनिलोऽपि परिपाण्डुराननोऽपि ।
गततन्द्र एष चीनः सुसखा सभाजयस्त्व ॥ ६ ॥
शिथिलं तवाङ्गवर्गं परिलक्ष्य दुःखसंघम् ।
कथयन्ति हन्त ! केचिद् गतजीवनं भवन्तम् ॥ ७ ॥
नृपधर्मकर्मठानि परमर्मशर्महाणि ।
किमु तात ! विस्मृतानि शुभचेष्टितानि तानि ॥ ८ ॥
भज बोधराजभक्तिं जहि पारतन्त्र्यपाशम् ।
त्यज दैववादवेगं ननु पौरुषं श्रयस्व ॥ ९ ॥
नहि निःस्पृहोपकारो न दया विना निमित्तम् ।
क्वचिदद्य तत् पराशां परिहाय चेष्टयस्व ॥ १० ॥
यदि वाञ्छितं प्रियं ते कुरु कर्मशर्मदायि ।
हतचेष्टिताय सिद्धिं प्रददाति नेश्वरोऽपि ॥ ११ ॥
यदि तात ! ते तनूजास्त्वयि भक्तिभावभाजः ।
निजदेशवेषभाषास्वभिमानमाभजेयुः ॥ १२ ॥
शिवपावनं त्वदङ्कं न विदेशिवस्तुभारैः ।
यदिमे विलाञ्छयेयुर्ननु दुःशकं किमस्ति ॥ १३ ॥
परमेश्वरेण सृष्टः समयो हिताय तेऽयम् ।
स्मर तत्स्वकृत्यमद्धा हर दैन्यशृङ्खलानि ॥ १४ ॥
भज संघशक्तियोगं त्यज भूरिभेदरोगम् ।
परिलप्स्यसे सुभोगं नृपजाजरक्षितोऽसि ॥ १५ ॥

गीतिः ।

रे चल ! चिन्तय चिन्तय सारम् ।
अभिसर मा संसारमसारम् ॥ १ ॥ रे चल०
विषयाशा विषविषपरिमोहित ।
यासि निरयमसि घोरम् ॥ २ ॥ रे चल०

मानवतनुरियमति दुरवापा ।
तरसि न किं भवपारम् ॥ ३ ॥ रे चल०
हरिपदयुगवरशरणमुपाविश ।
पञ्जरमिदमतिसारम् ॥ ४ ॥ रे चल०

---

## संस्कृत प्रहेलिका ( पहेलियां )

चक्री त्रिशूली न हरो न विष्णुर्महाबलिष्ठो न च भीमसेनः ।
इच्छानुचारी न यती न योगी, सीतावियोगी नच रामचन्द्रः ॥१॥

चञ्चुपुटी न चक्री न च काकी, तोयभरा न नदी न च वापी ।
सा कुशला कुशलेन गृहीता, मुञ्चति वाक् पद इन्दु नवोक्तिः ॥२॥

नारी च नामा न च राजकन्या वृक्षस्य वासो न च राजहंसः ।
दुग्धं स्रवन्ती न च कामधेनुः त्रिनेत्रधारी न च शूलपाणिः ॥३॥

वृक्षस्य वासी न च पक्षिराजः, तृणस्य शय्या न च राजयोगी ।
सुवर्णकायो न च राजहंसः, पुरुषस्य नामा न च राजपुत्रः ॥४॥

कृष्णमुखी न मार्जारी, द्वे जिह्वे न च सर्पिणी ।
पञ्चभर्त्ता न पाञ्चाली, यो जानाति स पण्डितः ॥ ५ ॥

## प्रकीर्णानि ।

कमलभूतनया मुखपङ्कजे, वसतु ते कमला करपल्लवे ।
वपुषि ते रमतां कमलाङ्गजः, प्रतिदिनं हृदये कमलापतिः ॥१॥

---

१—सांड २—क़लम । ३—नारियल । ४—आम्रफल । ५—क़लम ।

रात्रिर्गमिष्यति भविष्यति सुप्रभातम्,
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे,
हा हन्त हन्त ! नलिनीं गज उज्जहार ॥ २ ॥

न तज्जलं यन्न सुचारुपङ्कजम्,
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलम्,
न गुञ्जितं तन्न जहार यन्मनः ॥ ३ ॥

मोहादवाचीमबुधाः प्रतीचीं प्राचीमुदीचीमपि
सच्चिन्मये मानस एव तीर्थं स्वच्छे

किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छामतिः ।
किं शास्त्रं श्रवणेन यस्य गलति पापान्धकाराकरः ।
किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे ॥ ५ ॥

घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धम् ।
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् ।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णम्,
न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ ६ ॥

॥ इति शम् ॥

❀ ओ३म् ❀

# संस्कृत—शिक्षा

# षष्ठो भागः

जीवारामोपाध्यायप्रणीतः

स्वकीये सरस्वतीमुद्रणयन्त्रे मुरादाबादनगरे
मुद्रयित्वा प्रकाशितः।

Printed & Published by—
Pt. JIWARAM UPADHYAYA
at the Saraswati-Press,
MORADABAD.

षष्ठावृत्तौ १००० } संवत् १९६१ { मूल्यम् ॥)



## संस्कृत-शिक्षा—

# षष्ठो—भागः ।



स्मारं स्मारं जगदधिपतिं देवदेवं महेशम् ,
ध्यायं ध्यायं ह्यमरपददं ध्यानयोगादिगम्यम् ।
पायं पायं मधुरमधुरं वेदपीयूषसारम् ,
नामं नामं सकलसुखदं चौमजं स्वं प्रपद्ये ॥१॥

## अथ कृदन्त प्रकरणम् ।

इस प्रकरण में जो प्रत्यय धातु के आगे लगाये जाते हैं वे "कृत्" कहलाते हैं। इस लिये इस प्रकरण को 'कृदन्त' कहते हैं। कृदन्त की प्रातिपदिक संज्ञा करके वैयाकरण इसको सुबन्त शब्द कहते हैं।

इस प्रकरण में यदि एक प्रत्यय का अपवाद दूसरा प्रत्यय क है और वह प्रत्यय एक दूसरे से भिन्न स्वरूप का हो, तो पर्य्याय से दोनों ही होते हैं।

जैसे—'कर्मण्यण्' कुम्भकारः = कुम्हार। यहाँ अण्' प्रत्यय हुआ है इसका अपवाद आतोऽनुपसर्गे कः, गोदः = गाय को देने वाला। कम्बलदः = कम्बल को देने वाला। यहाँ पर उपसर्ग रहित आकारान्त धातुओं से क' प्रत्यय हुआ। परन्तु यह नियम स्त्रीलिङ्ग में नहीं बरतता। अक् और तृच् प्रत्यय पर्यन्त जो प्रत्यय हैं वे 'कृत्य' कहलाते हैं।

१—भाव और कर्म में धातु से तव्य और अनीय'र्' प्रत्यय लगाये जाते हैं। जैसे एधितव्यम्, एधनीयम् = बढ़ना चाहिये। चेतव्यः, चयनीयः = इकट्ठा करना चाहिये। पठितव्यम्, पठनीयम् = पढ़ना चाहिये। गन्तव्यम्, गमनीयम् = जाना चाहिये। पक्तव्यः, पचनीयः = पकाना चाहिये। दातव्यम्, दानीयम् = देना चाहिये। बोद्धव्यम्, बोधनीयम् = जानना चाहिये। भेत्तव्यः, भेदनीयः = चीरना चाहिये। कर्त्तव्यम्, करणीयम् = करना चाहिये। इसी प्रकार सब धातुओं से रूप बन सकते हैं।

२—इसी अर्थ में एलिम प्रत्यय भी होता है। पचेलिमाः = पकाने के योग्य। भिदेलिमाः = चीरने के योग्य। इत्यादि ॥

३—कृत्य और ल्युट् ( अन ) प्रत्यय बहुल करके होते हैं। बहुल का लक्षण।

क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥

अर्थ—जो कार्य किसी विधि से विधान न किया गया हो और हो जावे। २ जो होना चाहिये परन्तु न होवे। ३ नित्य कहा हो परन्तु विकल्प से होवे। ४ और कहीं कुछ का कुछ हो जावे यह चार प्रकार का बाहुलक कहलाता है। जैसे—दानीयो-विप्रः = जिसके लिये दान दिया जावे वह दानीय ब्राह्मण कहलाता है। यहाँ 'दा' धातु से 'अनीय—प्रत्यय, प्राप्त नहीं है तथापि होगया। क्योंकि उक्त प्रत्यय भाव और कर्म्म में ही विधान किया गया है परन्तु ब्राह्मण न कर्म है और न भाव किन्तु सम्प्रदान है। ( सम्प्रदान उसे कहते हैं जिसे दान दिया जावे )। तथापि अनीय - प्रत्यय हो गया। स्नान्ति येन तत् स्नानीयम् जलम् = नहाते हैं जिससे वह जल स्नानीय है। यहाँ भी न तो जल भाव है और न कर्म किन्तु करण है (करण

उस साधनको कहते हैं कि जिसके द्वारा कोई कार्य किया जावे) तथापि 'स्नानीय' में 'स्ना' धातु से अनीय प्रत्यय होगया।

४—अजन्त (स्वरान्त) धातुओं से भाव और कर्म में यत् (य, प्रत्यय होता है। जैसे-चि-चेयम् = इकट्ठा करना चाहिये। नी नेयम् = ले जाना चाहिये। दा-देयम् = देना चाहिये। पा-पेयम् = पीना चाहिये। ग्लै-ग्लेयम् = ग्लानी करना चाहिये।

५—जो धातु पवर्गान्त हैं और जिनके अन्त से पूर्व अकार है उन धातुओं से भी भाव और कर्ममें यत् (य) प्रत्यय होता है। जैसे—शप्-शप्यम् = विरुद्ध कथन योग्य। लभ्-लभ्यम् = प्राप्त होने योग्य।

६—इ स्तु शास् वृ दृ जुष् इन धातुओं से क्यप् (य) प्रत्यय होता है। इ-इत्यः = प्राप्ति के योग्य। स्तु-स्तुत्यः = स्तुति के योग्य। शास् शिष्यः = शिक्षा के योग्य। वृ वृत्यः = धारण करने योग्य। आ दृ आदृत्यः = आदर के योग्य। जुष् जुष्यः = प्रीति के योग्य।

७—मृज् धातु से विकल्प से क्यप् (य) प्रत्यय होता है। जैसे—मृज्यः, मार्ग्यः = पवित्र करने योग्य।

८—ऋवर्णान्त और व्यञ्जनान्त धातुओं से ण्यत् (य) प्रत्यय होता है। जैसे—कृ-कार्यम् = करने योग्य। हृ हार्य्यम्। हरने योग्य। ऋ-आर्यः = श्रेष्ठ। धृ-धार्यम् = धारण करने योग्य। भुज् भोज्यम् = खाने योग्य। वच्-वाच्यम् = कहने योग्य। पठ्-पाठ्यम् = पढ़ने पढ़ाने योग्य।

## उदाहरणानि।

एधितव्यं मनुष्येण समाजे पुण्यकर्मणा = समाज में मनुष्य को पुण्य कर्म से बढ़ना चाहिये। नैधनीयमधर्मेण नरेण पुण्य-कर्मणा = धर्मात्मा पुरुष को अधर्म से नहीं बढ़ना चाहिये। चेतव्यो धर्मोनित्यं नरेन्द्रेण महात्मना = महात्मा नरेन्द्र को धर्म

इकट्ठा करना चाहिये। चयनीयाः समिधो वेद्याम् पलाश-रसालयोः = वेदी में ढाक और आम की समिधायें चुनना चाहिये। अत्रौदना न पक्तव्याः शाकं पचनीयं त्वया = तुझको यहाँ भात नहीं पकाना चाहिये शाक पकाना चाहिये। पाठः पठनीयो वटो ! = हे बालक पाठ पढ़ना चाहिये। वृन्दावनं न गन्तव्यं वेला पाठस्य विद्यते = वृन्दावनको नहीं जाना चाहिये पढ़ने का समय है। दीनेभ्यो भोजनं वसनं दातव्यं धनिकैः सदा = धनियोंको दीनोंके लिये सदा भोजन और वस्त्र देना चाहिये। बोद्धव्यान्यात्मकर्माणि = अपने कर्मों को पहचानना चाहिये। कर्तव्यः सञ्चयो नित्यं धर्मस्य च धनस्य च = धर्म और धनका नित्य सञ्चय करना चाहिये। न स्नातव्यं न गन्तव्यं नदीकूले त्वया शिशो ! = हे बालक तुझको नदी के किनारे पर न जाना चाहिये न नहाना चाहिये। किं नेयं वस्तु किं देयं महेन्द्रपाणिपीडने = महेन्द्र के विवाह में क्या वस्तु लेजाना चाहिये और क्या देना चाहिये। वस्त्रपूतं जलं पेयं दुःखं देयं न कस्यचित् = कपड़े से छान कर जल पीना चाहिये किसी को दुःख नहीं देना चाहिये। ग्लेयं पापान्मनुष्येण दानं देयं यथाविधि = मनुष्य को पाप से ग्लानि करनी चाहिये विधि के अनुसार दान देना चाहिये। किमत्र लभ्यं त्वयका महात्मन्! = हे महात्मन् तुमको इसमें क्या मिलने योग्य है? इत्थं वृन्दावनं त्वया = तुझको वृन्दावन मिला। स्तुत्यो-मनुष्येण सदा भवति धार्मिकः = धर्मात्मा मनुष्य सदा स्तुति के योग्य होता है। आचार्येण सदा शिष्याः छात्रा बहुप्रयत्नतः = आचार्य को बहुत प्रयत्नसे छात्रों को सिखाना चाहिये। कन्यया स वरो वृत्यः आदृत्याश्च समे जनाः = कन्या को वह वर वरना चाहिये और सब पुरुषों का आदर करना चाहिये। मृज्यानि पात्राणि समानीमानि = ये सब वर्तन मांजने चाहिये। धर्मः कार्यः सदार्येण नो अधर्मः कदाचन = आर्यको सदा धर्म करना चाहिये

कदापि अधर्मं नहीं करना चाहिये। धृतिर्विपत्तौ मनुजेन धार्या = विपत्ति में मनुष्य को धैर्य रखना चाहिये। कोलाहलो-न कर्त्तव्यः सभायां खलु बालकैः = सभा में बालकोंको निश्चय-कोलाहल नहीं करना चाहिये। गृहाणि कार्याणि समुन्नतानि = ऊँचे घर बनाना चाहिये। धनं न हार्यं स्वप्नेऽपि कस्यचित् = स्वप्न में भी किसी का धन नहीं चुराना चाहिये। सदा प्रतिज्ञा परिपालनीया = प्रतिज्ञा का सदा पालन करना चाहिये। गुरु-कुलस्य जलं गुरु वर्त्तते = गुरुकुल का पानी भारी है। मार्ग्या इमे राजपथाश्च सर्वदा = ये राजमार्ग सदा साफ करने चाहिये। पेयं जलं नास्य घटस्य वर्त्तते = इस घड़े का पानी पीने के योग्य नहीं है। भोज्यं मदीयं नहि चात्र वर्त्तते = मेरे खाने के योग्य यहां नहीं है। इति कृत्यप्रक्रिया।

६—कर्त्ता अर्थ में धातुमात्र से ण्वुल् (अक) और तृच् प्रत्यय होते हैं। जैसे—कृ अक = कारकः = करने वाला। कृ तृच्, कर्ता = करने वाला। धर्त्ता, धारकः = धरने वाला। भर्त्ता, भारकः = पोषण करने वाला। नेता, नायकः = मुखिया। वक्ता, वाचकः = कहने वाला। पक्ता, पाचकः = पकाने वाला। भोक्ता, भोजकः = खाने वाला, भोगने वाला। ग्रहीता, ग्राहकः = लेने वाला। देविता, देवकः = खेलने वाला। तोत्ता, तोदकः = दुःख देने वाला। हर्त्ता, हारकः = चुराने वाला। दाता, दायकः = देने वाला। क्रेता, क्रायकः = ख़रीदने वाला। विक्रेता, विक्रायकः = बेचनेवाला। स्तोता, स्तावकः = तारीफ़ करनेवाला। जेता, जायकः = जीतनेवाला। गोप्ता, गोपकः = रक्षा करनेवाला। दग्धा, दाहकः = जलाने वाला। यष्टा, याजकः = यज्ञ करने वाला। वोढा, वाहकः = भार लेजाने वाला। दोग्धा, दोहकः = दुहने वाला। प्रष्टा, प्रच्छकः = पूछने वाला। स्रष्टा, सर्जकः = बनाने वाला। रोद्धा, रोधकः = रोकने वाला। गणयिता, गणकः

= गणितका जाननेवाला। कथयिता,कथकः – वक्ता कहने वाला।

## उदाहरणानि ।

भोक्तारो विप्रमुच्यन्ते = भोगने वाले छूट जाते हैं। कर्त्ता दोषेण लिप्यते = कर्त्ता दोषसे दबाया जाता है। स मे भर्त्ता भविष्यति = वह मेरा स्वामी होगा। हर्त्तारो मम वित्तस्य त्वदीया भ्रातरः समे = तेरे सब भाई मेरे धन को हरने वाले हैं। दाता-दानं करोति वै = निश्चय दाता दान करता है। होतारो न समागताः = हवन करने वाले नहीं आये। भवन्तो भोजकाः सर्वे स्वकर्म विगताः सदा = आप सब खानेवाले हैं अपने कर्म से विमुख हैं। पचन्ति सूपं न पठन्ति पाठम् = दाल को पकाते हैं पाठ को नहीं पढ़ते हैं। न तत्र क्रीणन्ति फलानि ग्राहकाः = वहां ग्राहक फलों को नहीं ख़रीदते। न क्रायकाः सन्ति समे जना इमे = ये सब मनुष्य खरीदने वाले नहीं हैं। विक्रायकस्य वणिजो नहिचैष धर्मः = वेचने वाले वनिये का यह धर्म नहीं है। वटवः पाठका नेमे नेमे सन्ति भोजकः = आधे ब्रह्मचारी पढ़ने वाले हैं और आधे खाने वाले।

## भाषा बनाओ ।

नाहं स्तोता भविष्यामि। जेता यास्यति संगरे। गोप्तारो मम भ्रातरः। दग्धुर्दोषोहि विद्यते। नागमिष्यन्ति याजकाः। अहं नो भारवाहकः। दोग्धा गोपालनन्दनः। प्रष्टारो लघवो बालाः। स्रष्टारं जगतो मन्ये निराकारं महेश्वरम्। रोद्धा को मे भविष्यति। गणका गणितं सर्वं अध्यापयन्ति बालकान्। कथां करोति कथकः। दानं ददति दातारः। पितरो मे स्वर्गं यान्ति।

## संस्कृत बनाओ ।

मैं तारीफ़ करने वाला नहीं बनूंगा। बहादुर युद्ध में जायगा। हे मेरे भाइयो! तुम बचाने वाले हो। आग लगाने वाले का अवश्य दोष है। यज्ञ करने वाले नहीं आवेंगे। मैं कुली

अश्व-अश्वा। चटक-चटका। मूषक-मूषिका। बाल-बाला। वत्स-वत्सा। होड-होडा। मन्द-मन्दा। मेघ—मेघा। गङ्ग-गङ्गा। सर्व—सर्वा। प्रिय—प्रिया। कान्त कान्ता। वृद्ध-वृद्धा। कृश-कृशा। दीन-दीना। सरल-सरला। चपल-चपला। निपुण-निपुणा। कृपण-कृपणा। चतुर—चतुरा। पूर्व-पूर्वा। पश्चिम-पश्चिमा। उत्तर—उत्तरा। दक्षिण—दक्षिणा। प्रथम-प्रथमा। मध्यम-मध्यमा। द्वितीय-द्वितीया। तृतीय—तृतीया। मनोहर-मनोहरा। अनुकूल-अनुकूला। प्रतिकूल—प्रतिकूला। आर्य्य-आर्य्या। दृढव्रत-दृढव्रता। निष्णात—निष्णाता। प्रियंवद—प्रियंवदा। प्रसन्न प्रसन्ना। प्रौढ-प्रौढा। बलिष्ठ-बलिष्ठा। बुभुक्षित-बुभुक्षिता। पिपासित—पिपासिता। विनीत—विनीता। विलक्षण—विलक्षणा। विवाहित—विवाहिता। विशाल—विशाला। विश्वस्त—विश्वस्ता। विह्वल—विह्वला। शिक्षित—शिक्षिता। उत्तम—उत्तमा। सौम्य-सौम्या। मलिन-मलिना। सत्यव्रत—सत्यव्रता। धर्मनिष्ठ-धर्मनिष्ठा। पापिष्ठ-पापिष्ठा।

२—उगिदन्त प्रातिपदिक से स्त्रीलिङ्ग में ङीप् (ई प्रत्यय होता है। यथा—भवतु-भवन्ती। पचन्ती। कुर्वन्ती। क्रीडन्ती।

३—टित्, ढ, अण्, ऋञ्, द्वयसच्, दघ्नञ्, मात्रच्, तयप्, ठक्, ठञ्, कञ् और क्वरप् ये ११ प्रत्यय जिनके अन्त में हों उन अनुपसर्जनोंसे स्त्रीलिङ्गमें ङीप् प्रत्यय होता है। यथा-कुरुचर—कुरुचरी। नदट्—नदी। देवट्—देवी। सुपर्णा-सौपर्णेयी। इन्द्र-ऐन्द्री। उत्स-औत्सी। उरुद्वयस-उरुद्वयसी। ऊरुदघ्न—ऊरुदघ्नी, ऊरुमात्र—ऊरुमात्री। पञ्चतय-पञ्चतयी। आक्षिक—आक्षिकी। प्रास्थिक-प्रास्थिकी। लावणिक-लावणिकी। यादृश—यादृशी। इत्वर—इत्वरी।

४—यञन्त प्रातिपदिक से स्त्रीलिङ्गमें ङीप् प्रत्यय होताहै।

५—ईकार परे होतो हल्से परे तद्धित के उपधाभूत यकार

के ऐसे ऊरूत्तर प्रातिपदिक से स्त्रीलिङ्ग में ऊङ् प्रत्यय होता है। यथा-संहितो मिलितौ ऊरू यस्याः सा-संहितोरूः। शफाविव ऊरूः यस्याः सा-शफोरूः। लक्षणौ ऊरू यस्याः सा-लक्षणोरूः। वामौ सुन्दरौ ऊरू यस्याः सा-वामोरूः।

२७—शार्ङ्गरवादि और अञ् प्रत्ययान्त प्रातिपदिक से स्त्रीलिङ्ग में ङीन् प्रत्यय होता है। यथा-शार्ङ्गरवी। वैदी। ब्राह्मणी।

२८—युवन् शब्दसे स्त्रीलिङ्गमें ति प्रत्यय होता है। युवतिः।

इति स्त्रीप्रत्ययाः।

## उदाहरणानि।

अजाया गदहं क्षीरं लाघवं बलवर्धकम् = बकरी का दूध रोग को दूर करने वाला हलका तथा बल को बढ़ाने वाला है। इमेऽश्वे न ते चपले = तेरी ये दोनों घोड़ियां चञ्चल नहीं हैं। मूषिकेयं सदागत्य धान्यं खादति मामकम् = यह चुहिया नित्य आकर मेरे अन्न को खाती है। कान्ता क्रीडति बालिका = सुन्दर लड़की खेलती है। दीना वृद्धाः सदा रक्ष्या अन्नेन वसनेन च = दीन बुढ़ियायें सदा अन्न और वस्त्र से रक्षा करने योग्य हैं। अनेन शुभकार्येण प्रसन्ना जननी मम = इस शुभ काम से मेरी माता प्रसन्न है। मम मतं खण्डयति मतं स्वकं मण्डयति = मेरे मत का खण्डन करता है अपने मत का मण्डन करता है। विशाला भवतो बुद्धिः सिद्धा स्वकेन कर्मणा = इस निजी कर्मसे आपकी विस्तीर्णा बुद्धि सिद्ध हुई। दृढव्रता राजसुता बभूव = सत्यप्रतिज्ञा वाली राजा की लड़की हुई। प्रियंवदायाश्चरितं विचित्रम् = प्रियंवदा का कार्य अनोखा है। बुभुक्षिता किं न करोति पापम् = भूखी क्या पाप नहीं करती? पिपासिता रौषि बुभुक्षिता वा = तू प्यासी रोती है या भूखी। मनोहरा मूर्त्तिरियं विराजते = यह मनोहर मूर्त्ति विराजमान है। शिक्षितेयं प्रतीयते = यह शिक्षिता मालूम होती है। यादृशी सरलादेवी तादृशी

विमला न वा = जैसी सरलादेवी है वैसी विमला है या नहीं ? पापिष्ठे ! त्वन्न लज्जसे = पापिन तू नहीं शरमाती । नमामि सुखदादेवीं धर्मनिष्ठां दृढव्रताम् = धर्म पर चलने वाली और सत्य प्रतिज्ञा वाली सुखदा देवी को नमस्कार करता हूँ ।

## भाषा बनाओ ।

इयं शाला कुमारीणां त्वा केन नियतीकृता । जलं समादाय व्रजन्ति गोप्यः । इदानीं भारतेवर्षे राज्यं कस्य विराजते ? भूपपञ्चमजार्जस्य गौराङ्गस्य महाप्रभोः । भगवन् ! भारते वर्षे सौराज्यं च लभेमहि । अस्मिन् कर्मणि सर्वेषां मनो बुद्धिं प्रचोदयात् । अध्यापिकानां कमला मलीमसा । चन्द्रमुखी चपला च कन्यका । मातामही मे न हि मातुलानी । न ब्राह्मणीयं यवनी प्रतीयते । युवतिराशुगता सुमते ! क्व सा । इयं कुमारी चतुरा विधिज्ञा । अधीतानि शास्त्राणि सर्वाणि वाले ? देव्या छिन्नानि शीर्षाणि कृपाणेन तदारणे । विहिता न प्राज्ञी न राज्ञी प्रधाना । समाजे सभायां च लिङ्गस्य भेदः । श्रावयामि समाचारं शुभं च मङ्गलप्रदम् । पारतन्त्र्यं महद्दुःखं स्वातन्त्र्यं परमं सुखम् ।

## संस्कृत बनाओ ।

यह लड़कियों की पाठशाला किस आदमी ने नियत की है । पानी लेकर गोपियाँ जाती हैं । सब अध्यापिकाओं में कमला मैली है । चन्द्रमुखी कन्या चपल है । मेरी नानी नहीं मामी है । यह ब्राह्मणी नहीं मुसलमानी मालूम होती है । हे सुमति ! वह जवान स्त्री कहाँ चली गई । यह लड़की चतुर और विधि को जानने वाली है । हे कन्या सब शास्त्र पढ़ लिये ? युद्ध में तब देवी ने तलवार से शिर काट डाले । न पण्डिता और न रानी प्रधाना बनाई । समाज और सभा में लिङ्ग का भेद है । शुभ और मङ्गलप्रद समाचार को सुनाता हूँ । इस समय भारतवर्ष में किसका राज्य है ? गौराङ्ग महाराज पञ्चमजार्ज का ।

## अथ समासप्रकरणम् ।

अनेक पदों को एक पद में मिलाकर प्रयोग करना समास कहलाता है। समास समर्थ ( सापेक्ष ) पदों का ही होता है असमर्थ ( अनपेक्ष ) पदों का नहीं होता । यथा—जनानाम् संघः जनसंघः = मनुष्यों का समूह । यहां षष्ठ्यन्त जनपद प्रथमान्त सङ्घपद के साथ सामर्थ्य ( अपेक्षा ) रखता है, अर्थात् जनों का सङ्घ । अतः समास होगया । प्रकृतिः परमाणूनाम् । समुदायः पशूनाम् । स्वभाव परमाणुओं का । समुदाय पशुओं का । यहां षष्ठ्यन्त परमाणु शब्द की प्रथमान्त प्रकृति पद के साथ अपेक्षा नहीं है अतएव समास नहीं हुआ ।

समास में जितने पद हों उन सबके अन्त में एक विभक्ति शेष रहती है अन्य विभक्तियों का लोप होजाता है। यथा—गुरूणाम् कुलम् = गुरुकुलम् । यहां गुरुशब्द की षष्ठी विभक्ति (आम्) का लुक् ( लोप ) होगया। शिवश्च रामश्च केशवश्च = शिवरामकेशवाः। यहां शिव और राम इन दोनों शब्द की प्रथमा विभक्ति ( सु ) का लुक् होगया । समास चार प्रकार का होता है। १ अव्ययीभाव २ तत्पुरुष ३ बहुव्रीहि ४ द्वन्द्व । द्विगु और कर्मधारय तत्पुरुष के ही अवान्तर भेद हैं।

अव्ययीभाव में पूर्वपद का अर्थ प्रधान होता है, यथा-पञ्चनदम् । पञ्च यहां शब्द प्रधान है । तत्पुरुष में उत्तरपद प्रधान होता है। यथा-सभापति । यहां पति शब्द प्रधान है बहुव्रीहि में अन्य पदार्थ प्रधान होता है। यथा—लम्बोदरः । यहां लम्ब और उदर इन दोनों शब्दों से भिन्न जो व्यक्ति लम्ब उदर वाला है वह प्रधान है । द्वन्द्व में दोनों पद प्रधान रहते हैं। यथा—शीतोष्णम् । यहां शीत और उष्ण दोनों ही प्रधान हैं।

### १ अव्ययीभावः ।

अव्ययों का सुबन्तों के साथ जो समास होता है। उसको

अव्ययीभाव कहते हैं, इसमें अव्यय के साथ समास होने से सुबन्त भी अव्ययके सदृश होजाते है, इसलिये इसकी अव्ययीभाव संज्ञा है। अव्ययीभाव समास में सदा अव्यय का सुबन्त से पूर्व प्रयोग होता है। अव्ययीभाव समास किये हुये समस्त शब्द नपुंसकलिङ्ग और प्रथमा के एकवचनान्त ही रहते हैं तथा अन्त्य अच् को ह्रस्व भी होजाता है। अव्ययीभाव समास दो प्रकार का होता है। १ अव्ययपूर्वपद २ नामपूर्वपद ।

## अव्ययपूर्वपद ।

१—विभक्ति समीप, समृद्धि, व्यृद्धि, अर्थाभाव, अत्यय, असम्प्रति, शब्दप्रादुर्भाव, पश्चात्, यथा, आनुपूर्व्य, यौगपद्य, सादृश्य, सम्पत्ति, साकल्य और अन्तवचन में जो अव्यय वह समर्थ सुबन्त के साथ समासको प्राप्त होता है और वह समास अव्ययीभाव कहलाता है।

२—समास में प्रथमा विभक्ति से निर्देश किया पद उपसर्जन संज्ञक होता है।

३—समास में उपसर्जन संज्ञक का पूर्व प्रयोग होता है।

४—अव्ययीभाव समास भी नपुंसकलिङ्ग होता है।

५—अदन्त अव्ययीभाव से परे सुप् का लुक् नहीं होता पञ्चमी विभक्ति भिन्न सुप् को अम् आदेश होता है।

६ –अदन्त अव्ययीभावसे परे तृतीया और सप्तमी विभक्ति को बहुल करके अम् आदेश होता है।

७—काल को छोड़कर अव्ययीभाव समास में सह को स आदेश होता है। यथा विभक्ति-स्त्रीषु अधि = अधिस्त्रि = स्त्रियों में। यहां विभक्ति से केवल सप्तम्यन्त का ग्रहण है। इसी प्रकार अधि हरि, अधिगिरि, अधिनदि-इत्यादि।

आचार्यस्य समीपम्-उपाचार्यम्। इसी प्रकार उपकृष्णम्।

१३—अन्नत नपुंसक अव्ययीभाव से विकल्प करके समासान्त टच् प्रत्यय होता है। चर्मणः समीपम् = उपचर्म, उपचर्मम्।

१४—झयन्त अव्ययीभाव से विकल्प करके समासान्त टच् प्रत्यय विकल्पसे होता है । यथा—समिधः समीपम् = उपसमिधम्, उपसमित्। उपस्रजम्, उपस्रक्। त्वचः समीपम् = उपत्वचम्, उपत्वक्।

इत्यव्ययीभावः।

---

## भाषा बनाओ ।

उपाचार्यमधीमहे। उपगृहं भवतो मम मन्दिरम्। सुविघ्नं नो इदं कार्यं भवतो विद्यते सखे! दुर्यवनं भारते वर्षे कारणं किं? तदुच्यताम्। वृन्दावने न दुष्पापम्। तदा ते बालकाः सर्वे किं जग्मुर्निर्जनं वनम्। अतिहिमं नगरे न हि जङ्गले। अनुरथं नगरं तरुणो गतः। अनुपदं गमनं मम ते शुभम्। अनुगुणं हि व्रजन्ति समे जनाः। प्रतिवृक्षं जलं सिञ्च। इदं कार्यं त्वया कार्यं यथाशक्ति यथाबलम्। यथापूर्वमकल्पयत्। यथाक्रमं न तिष्ठन्ति सर्वदा बालका इमे। यथायथं हि वक्तव्यं न्यायाधीशस्य सम्मुखे। यथायथं हि जानाति कार्याणि ममेश्वरः। अनुज्येष्ठं व्रजन्ति ते ये च भवन्ति शिक्षिताः। नाशं यातं सक्षत्रियम्। सवल्कलं नाम्रफलानि खादतु। सवेदं न मयाधीतं दुःखमेतद्धि विद्यते। प्रत्यक्षं सकलं कार्यं परोक्षं न हि विद्यते। गजस्य दन्ता अशनस्य चान्ये भवन्ति भिन्ना च विलोकनस्य। अद्यतनीये पाठे कति सूत्राणि पठितानि। भूपालस्य प्रजा यस्य दुःखं लालभ्यते मुहुः। ध्रुवं नश्यति तद् राज्यं इति रामोवचोऽब्रवीत्।

## संस्कृत बनाओ।

हम आचार्य के पास पढ़ते हैं। आपके मकान के पास

मेरा मकान है। अयि! मित्र यह आपका काम विद्या की वृद्धि का नहीं है। यवनों की अवनति का कारण हिन्दुस्तान में क्या है वह बतलाइये। वृन्दावन में पापों की कमी नहीं है। तब वे सब लड़के निर्जन वन में चले गये। शहर में शीत नहीं जङ्गल में है। रथ के पीछे नगर को जवान चला गया। मेरे पीछे तेरा चलना अच्छा है। गुणों के पीछे ही सब मनुष्य चलते हैं। प्रत्येक पेड़ में पानी दे। अपनी शक्ति और बल के अनुसार इस काम को तुम को करना चाहिये। पहले की भांति बनाया। ये लड़के कभी भी तरतीब से नहीं खड़े होते। न्यायाधीश के सामने सत्य कहना चाहिये। ज्यों के त्यों ईश्वर मेरे कामों को जानता है। जो शिक्षित होते हैं वे बड़ों के पीछे चलते हैं। क्षात्रधर्म नष्ट होगया। छिलके सहित आमों को न खाओ। वेद पर्यन्त मैंने नहीं पढ़ा यह मुझे दुःख है। सब काम आंखों के सामने हैं पीछे कुछ नहीं। आज के पाठ में कितने सूत्र पढ़े।

## तत्पुरुषः।

१—तत्पुरुष समास का अधिकार है। द्विगु समास भी तत्पुरुष के अन्तर्गत समझा जाता है।

२—द्वितीयान्त सुबन्त श्रित अतीत पतित गत अत्यस्त प्राप्त और आपन्न सुबन्तों के साथ समास को प्राप्त होता है और वह समास तत्पुरुषसंज्ञक होता है। यथा दुःखं श्रितः = दुःखश्रितः। कान्तारम्-अतीतः = कान्तारातीतः। सुखम् पतितः = सुखपतितः। ग्रामम् गतः = ग्रामगतः। तरङ्गान् अत्यस्तः = तरङ्गात्यस्तः यौवनम्-प्राप्तः = यौवनप्राप्तः। शरणम्-आपन्नः = शरणापन्नः।

३—तृतीयान्त सुबन्त तत्कृत (तृतीया से किये) गुणवचन और अर्थ सुबन्त के साथ समास को प्राप्त होता है और वह समास तत्पुरुष संज्ञक कहलाता है। शङ्कुलया खण्डः = शङ्कुलाखण्डः। धान्येन अर्थः = धान्यार्थः। पठनेन अर्थः = पठनार्थः।

४—चतुर्थ्यन्त सुबन्त तदर्थ अर्थ बलि हित सुख और रक्षित सुबन्तों के साथ समास को प्राप्त होता है और वह समास तत्पुरुष कहलाता है। यथा—कपाटाय दारु = कपाटदारु। विप्रायायं विप्रार्थो वेदः। भूतेभ्यो बलिः = भूतबलिः। पुरुषाय हितम् = पुरुषहितम्। नराय सुखम् = नरसुखम्। गुरवे रक्षितम् = गुरुरक्षितम्।

५—पञ्चम्यन्त सुबन्त भयवाचक सुबन्त के साथ समास को प्राप्त होता है और वह समास तत्पुरुष कहलाता है। यथा—सर्पाद् भयम् = सर्पभयम्। पापाद् भयम् = पापभयम्। वृकाद् भयम् = वृकभयम्।

६—स्तोकार्थ अन्तिकार्थ दूरार्थ और कृच्छ्र शब्द पञ्चम्यन्त सुबन्त क्तान्त सुबन्त के साथ समास को प्राप्त होते हैं और वह समास तत्पुरुष कहलाता है।

७—उत्तरपद परे होने पर स्तोकादिक से परे पञ्चमी विभक्ति का अलुक् होता है अर्थात् विभक्ति बनी रहती है। यथा—स्तोकाद् मुक्तः = स्तोकान्मुक्तः। अन्तिकाद् आगतः = अन्तिकादागतः। अभ्याशाद् आगतः = अभ्याशादागतः। दूराद् आगतः = दूरादागतः। कृच्छ्राद् मुक्तः = कृच्छ्रान्मुक्तः।

८—षष्ठ्यन्त सुबन्त समर्थ सुबन्त के साथ समास को प्राप्त होता है और वह समास तत्पुरुष कहलाता है। यथा—राज्ञः पुरुषः = राजपुरुषः। विद्यायाः आलयः = विद्यालयः। पुस्तकानाम् आलयः = पुस्तकालयः।

९—एक अधिकरण में एकदेशी सुबन्त के साथ पूर्व अपर अधर और उत्तर शब्द समास को प्राप्त होते हैं और वह समास तत्पुरुष कहलाता है। यथा—पूर्वं कायस्य = पूर्वकायः। यहां काय अवयवी और पूर्वं इसका अवयव है और दोनों काय (अवयवी) और (अवयव) एकत्र हैं ऐसे ही अपरं

कायस्य = अपरकायः। अधरं कायस्य = अधरकायः । उत्तरं कायस्य = उत्तरकायः।

१०—सम अंशवाचक नपुंसकलिङ्ग अर्धशब्द एकाधिकरण में एकदेशी सुबन्तके साथ समास को प्राप्त होता है। और वह समास तत्पुरुष कहलाता है। अर्धं पिप्पल्याः = अर्धपिप्पली।

११—सप्तम्यन्त सुबन्त शौण्ड आदि सुबन्तों के साथ समास को प्राप्त होता है और वह समास तत्पुरुष कहलाता है। अक्षेषु शौण्डः = अक्षशौण्डः। द्यूते निपुणः = द्यूतनिपुणः।

१२—संज्ञा विषय में दिशावाचक और संख्या सुबन्त समानाधिकरण सुबन्त के साथ समास को प्राप्त होते हैं और वह समास तत्पुरुष कहलाता है। यथा-पूर्वश्चासौ इषुकामशमी = पूर्वेषुकामशमी। सप्त च ते ऋषयः = सप्तर्षयः।

१३—तद्धितार्थ विषय में उत्तरपद परे हो और समाहार अभिधेय हो तो दिशावाचक और संख्या सुबन्त समानाधिकरण सुबन्त के साथ समास को प्राप्त होता है और वह समास तत्पुरुष कहलाता है। यथा-पूर्वस्यां शालायां भवः।

१४—असंज्ञा विषयक दिक् पूर्वपद प्रातिपदिक से शैषिक ञ प्रत्यय होता है।

१५—ञित् और णित् तद्धित प्रत्यय परे हो तो अचों के आदि अच् को वृद्धि होती है। पौर्वशालः। पञ्चगावो धनं यस्य, ऐसा होने पर—

१६—तद्धित का लुक् न हुआ हो तो तत्पुरुष समासान्त गो शब्द से टच् (अ) प्रत्यय होता है। यथा—पञ्चगवधनः।

१७—समानाधिकरण तत्पुरुष कर्मधारय कहलाता है।

१८—तद्धितार्थ विषय में उत्तरपद परे हो और समाहार अभिधेय हो तो संख्या जिसके पूर्व है ऐसा समास द्विगु कहलाता है।

१९—द्विगु अर्थवाला समाहार एक वचन में ही प्रयुक्त होता है।

२०—समाहार में द्विगु और द्वन्द्व समास नपुंसकलिङ्ग में प्रयुक्त होता है। यथा-पञ्चानां गवां समाहारः = पञ्चगवम्।

२१—विशेषण ( भेदक ) विशेष्य ( भेद्य ) समानाधिकरण के साथ बहुलता से समास को प्राप्त होता है और वह समास तत्पुरुष (कर्मधारय) कहलाता है। यथा-नीलं च तद् उत्पलम् नीलोत्पलम् , नीलम् उत्पलम्। यहां विकल्प से समास हुआ। कृष्णश्चासौ सर्पः कृष्णसर्पः। यहां नित्य समास हुआ। रामो-जामदग्न्यः। यहां समास नहीं हुआ।

२२ - उपमान वाचक सुबन्त सामान्य वाचक सुबन्तों के साथ समास को प्राप्त होते हैं और वह समास तत्पुरुष (कर्मधारय ) कहलाता है। यथा-घन इव श्यामः = घनश्यामः।

२३—नञ् सुबन्त के साथ समास को प्राप्त होता है और वह समास तत्पुरुष कहलाता है।

२४—उत्तरपद परे हो तो नञ् के नकार का लोप होता है। यथा-न ब्राह्मणः = अब्राह्मणः। न ब्रह्मचारी = अब्रह्मचारी।

२५—उस लुप्त नकार नञ् से परे अजादि उत्तरपद को नुट् का आगम होता है। यथा-न अश्वः = अनश्वः। न ईशः = अनीशः। न आर्यः = अनार्यः।

२६—कुशब्द गति संज्ञक और प्रादि समर्थ सुबन्त के साथ समासको प्राप्त होते हैं और वह समास तत्पुरुष कहलाता है। यथा—कुत्सितः पुरुषः = कुपुरुषः। कुत्सिता चेष्टा = कुचेष्टा। कुत्सितं कर्म = कुकर्म।

२७—ऊरी आदि शब्द च्वि प्रत्ययान्त और डाच् प्रत्य-यान्त क्रिया के योग में गति संज्ञक होते हैं। यथा-ऊरीकृत्य = स्वीकार करके। अशुक्लं शुक्लं कृत्वा = शुक्लीकृत्य। पटपटा-

कृत्य। पट पट शब्द करके। सुष्ठु पुरुषः = सुपुरुषः।

२८—पूर्वनिपात को छोड़कर एक विभक्तिस्थ पद उपसर्जन संज्ञक होता है।

२९—उपसर्जन गो शब्दान्त और उपसर्जन स्त्री प्रत्ययान्त प्रातिपदिक को ह्रस्व होता है। अतिक्रान्तो मालाम्—अतिमालः।

३०—इस धातु अधिकारमें जो सप्तमी विभक्ति निर्दिष्टपद, वह उपपद संज्ञक होता है।

३१—तिङ् भिन्न उपपद सुबन्त समर्थ सुबन्त के साथ नित्य समास को प्राप्त होता है और वह समास तत्पुरुष कहलाता है। कुम्भं करोतीति कुम्भकारः। पटं करोतीति पटकारः।

३२—संख्या आदि तथा अव्यय आदि अङ्गुली शब्दान्त तत्पुरुष से समासान्त अच् प्रत्यय होता है। यथा—द्वे अङ्गुली प्रमाणं यस्य = द्व्यङ्गुलम्। निर्गतमङ्गुलिभ्यः = निरङ्गुलम्।

३३—अहः (दिन) सर्व एकदेश संख्यात (गिना हुआ) पुण्य से संख्यादि तथा अव्ययादि से परे रात्रिशब्दान्त तत्पुरुष से अच् प्रत्यय होता है।

३४—रात्र अह्न और अह जिसके अन्तमें हों वे पुंल्लिङ्ग में होते हैं। यथा—अहश्च रात्रिश्च = अहोरात्रः। सर्वा चासौ रात्रिः = सर्वरात्रः। संख्याता रात्रिः = संख्यातरात्रः। संख्या जिसके पूर्व हो ऐसा रात्र शब्द नपुंसकलिङ्ग में प्रयुक्त होता है। यथा—द्वयोः रात्र्योः समाहारः = द्विरात्रम्। तिसृणां रात्रीणां समाहारः = त्रिरात्रम्।

३५—राजन् अहन् और सखि शब्द जिसके अन्त में हों उस प्रातिपदिक से टच् (अ) प्रत्यय होता है। यथा—परमश्चासौ राजा परमराजः। अतिक्रान्तो राजानम् = अतिराजः। देवाः सखायो यस्य स देवसखः।

३६—समानाधिकरण उत्तरपद तथा जातीय प्रत्यय परे हो

तो महत् शब्द को आकारादेश होता है। यथा—महांश्चासौ राजा महाराजः-बड़ा राजा। महाप्रकारो महाजातीयः।

३७—बहुव्रीहि समास और अशीति को छोड़कर संख्या-वाचक उत्तरपद हो तो द्वि और अष्टन् शब्द को आकारादेश होता है। यथा—द्वौ च दश च = द्वादश = बारह। अष्टौ च विंशतिश्च अष्टाविंशतिः। अट्ठाईस।

३८—द्वन्द्व और तत्पुरुष समासमें परे के तुल्य लिङ्ग होता है। यथा—कुक्कुटश्च मयूरी च = कुक्कुटमयूर्यौ इमे। मयूरी च कुक्कुटश्च = मयूरीकुक्कुटौ इमौ = ये दोनों मोरनी और मुर्गे हैं। जो लिङ्ग आगे का होता है उसीके तुल्य रूप चलते हैं।

३९—अर्धर्चादि गणपठित शब्द पुंल्लिङ्ग और नपुंसक दोनों लिङ्गों में रहते हैं। यथा-अर्धर्चम्, अर्धर्चः। तीर्थम्, तीर्थः। शरीरम्, शरीरः। मण्डपम्, मण्डपः। देहम्, देहः। पात्रम्, पात्रः। सूत्रम्, सूत्रः-इत्यादि।

## बहुव्रीहिः।

१—अन्य पदार्थ में वर्त्तमान अनेक सुबन्त समर्थ सुबन्त के साथ समास को प्राप्त होता है और वह समास बहुव्रीहि कहलाता है।

२—बहुव्रीहि समास में सप्तम्यन्त और विशेषण का पूर्व प्रयोग होता है।

३—संज्ञाविषय में हलन्त और अदन्त से परे सप्तमी विभक्ति का लुक् नहीं होता है। कण्ठे कालो यस्य सः कण्ठेकालः = जिसके गले में प्राण आगये हैं। प्राप्तम् उदकम् यं ग्रामं सः प्राप्तोदकोग्रामः। जितानि इन्द्रियाणि येन स जितेन्द्रियो-यतिः। दत्तानि मोदकानि यस्मै सः = दत्तमोदकोबालः। उद्धृतम् उदकं यस्मात् सः = उद्धृतोदकः कुम्भः। वीरा सेना यस्य स वीरसेनः शिवराजः। वीराः पुरुषा यस्मिन् देशे

सः = वीरपुरुषो भारतवर्षः।

४—पूरणी आदि प्रियादि वर्जित समानाधिकरण स्त्रीलिङ्ग उत्तरपद परे होतो भाषितपुंस्क से परे ऊङ् वर्जित स्त्रीलिङ्ग को पुल्लिङ्ग के समान कार्य होता है।

५—गोशब्दान्त और स्त्रीप्रत्ययान्त प्रातिपदिक को ह्रस्व होता है। यथा - चित्रा गावो यस्य सः = चित्रगुः। यहां पर गो को गु और इसमें प्रथम ४ से चित्रा को चित्र होगया। रूपवती भार्या यस्य सः = रूपवद्भार्यः।

६—पूरण प्रत्ययान्त और प्रमाण्यन्त बहुव्रीहि से समासान्त अप् प्रत्यय होता है। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। स्त्री प्रमाणी यस्य सः स्त्रीप्रमाणः।

७—स्वाङ्गवाचकसक्थि अक्षि शब्दान्त बहुव्रीहि समास से षच् प्रत्यय होता है। यथा-दीर्घे सक्थिनी यस्य सः दीर्घसक्थः। जलजे इव अक्षिणी यस्याः सा = जलजाक्षी = कमल के तुल्य आंखें जिस स्त्री की हों वह।

८—बहुव्रीहि समास में अन्तर् बहिस् से परे जो लोमन् उससे समासान्त अप् प्रत्यय होता है। यथा-अन्तः लोमानि यस्य सः = अन्तर्लोमः = जिसके बीच में रुयें हों वह। बहिः लोमानि यस्य सः-बहिर्लोमः = जिसके बाहर रुयें होवें वह।

९—बहुव्रीहि समास में हस्ति आदि वर्जित उपमानवाचक से परे समासान्त पाद शब्द का लोप होता है। यथा - व्याघ्रस्येव पादौ यस्य सः व्याघ्रपात् = जिसके भेड़िये के पैरों के सदृश पैर हों वह।

१०—बहुव्रीहि समास में संख्या और सु है पूर्व जिसके ऐसे समासान्त पाद के अन्त्य का लोप होता है। यथा-द्वौ पादौ यस्य स द्विपात्। त्रयः पादाः यस्य स त्रिपाद्। शोभनौ पादौ यस्य स सुपात्।

११—बहुव्रीहि समासमें उद् और वि उपसर्गपूर्वक काकुद (तालु) शब्द के अन्त्य का लोप होता है। यथा-उन्नतं काकुदं यस्य सः = उत्काकुत्। विकाकुद्।

१२—बहुव्रीहि समास में पूर्णशब्द से परे काकुद शब्द के अन्त्य का विकल्प से लोप होता है। यथा - पूर्णं काकुदं यस्य स पूर्णकाकुद्, पूर्णकाकुदः।

१३—बहुव्रीहि समास में मित्र और अमित्र (शत्रु) वाच्य हों तो सुहृद् और दुर्हृद् शब्द निपातन किये गये हैं। शोभनं हृदयं यस्य स सुहृन्मित्रम्। दुष्टं हृदयं यस्य स दुर्हृदमित्रः।

१४—उरस् आदि शब्दों से बहुव्रीहि समासमें कप् प्रत्यय होता है।

१५—कस्कादि गणपठित शब्दों के विसर्जनीय को यथा योग्य षकार या सकार आदेश होता है। यथा-व्यूढं विशालम् उरः वक्षः यस्य स व्यूढोरस्कः = विस्तृत छाती वाला। प्रियं सर्पिर्यस्य स प्रियसर्पिष्कः = जिसको घी अच्छा लगता है।

१६—बहुव्रीहि समासमें निष्ठान्त का पूर्वप्रयोग होता है। यथा—कृतं कृत्यं येन स कृतकृत्यः। पठितः पाठो येन स पठितपाठः। श्रुता श्रुतिः येन स श्रुतश्रुतिः।

१७—शेष बहुव्रीहि से विकल्प से कप् प्रत्यय होता है। यथा—महद् यशः यस्य सः = महायशस्कः, महायशाः = बहुत कीर्त्तिमान्।

१८—द्वि और त्रि शब्द से परे जो मूर्धन् (शिर) तदन्त बहुव्रीहि से समासान्त ष प्रत्यय होता है। यथा - द्वौ मूर्धानौ यस्य स द्विमूर्धः = दो शिर वाला। त्रयो मूर्धानो यस्य स त्रिमूर्धः = तीन शिर वाला।

## द्वन्द्व।

१—चकार के अर्थ में वर्तमान अनेक सुबन्त समर्थ सुबन्त

के साथ समास को प्राप्त होते हैं और वह समास द्वन्द्व कहलाता है।

द्वन्द्वसमास के चार भेद होते हैं। समुच्चय १ अन्वाचय २ इतरेतरयोग ३, समाहार ४। समुच्चय-ईश्वरं गुरुं च भजस्व = तू ईश्वर और गुरु की सेवा कर। अन्वाचय - पाठं पठ जलं चानय = तू पाठ को पढ़ और जल को ला। इतरेतर—रामश्च लक्ष्मणश्च रामलक्ष्मणौ। समाहार-अहं च युवां च ते च तत्र गच्छामः = मैं तुम दोनों और वे सब वहां जाते हैं।

२—राजदन्तादि गण में उपसर्जन संज्ञक का पर प्रयोग होता है। यथा—दन्तानां राजा = राजदन्तः।

३—द्वन्द्व समास में घिसंज्ञक का पूर्व प्रयोग होता है। हरिश्च हरश्च = हरिहरौ। पटुश्च जडश्च = पटुजडौ = चतुर और मूर्ख।

४-द्वन्द्व समास में अजादि अदन्त का पूर्व प्रयोग होता है। यथा —इन्द्रचन्द्रौ।

५—द्वन्द्व समास में अल्प अच् का पूर्वप्रयोग होता है। यथा—शिवकेशवौ।

६ — मातृशब्द के साथ पितृ शब्द विकल्प से शेष रहता है। यथा—माता च पिता च = पितरौ, मातापितरौ = मा बाप।

७—प्राणिअङ्ग तूर्यअङ्ग और सेना के अङ्गों का द्वन्द्वसमास एकवचन होता है। तथा समाहार में द्विगु और द्वन्द्व समास नपुंसकलिङ्ग होजाता है। यथा-पाण्योः पादयोश्च समाहारः = पाणिपादम् = हाथ पैर का एकीभाव। मार्दङ्गिकपाणविकयोः समाहारः = मार्दङ्गिकपाणविकम् = मृदङ्ग और ढोल बजाने वालों का समूह। रथिकानामश्वारोहाणां च समाहारः - रथिकाश्वारोहम् = रथसवार और घुड़सवारों का एकीभाव।

८—समाहार में चवर्गान्त दकारान्त षकारान्त और हकारान्त द्वन्द्व से समासान्त टच् प्रत्यय होता है। यथा—वाक् च

त्वक् च वाक्त्वचम् = वाणी और चमड़ा। त्वक् च स्रक् च = त्वक्स्रजम् = चमड़ा और माला। शमी च दृषच्च = शमीदृषदम् = छेंकुर और पत्थर। वाक् च त्विट् च = वाक्त्विषम् = वाणी और भूसी। छत्रं च उपानच्च = छत्रोपानहम् = छाता और जूता

९—अक्ष वर्जित ऋक्, पुर्, अप्, धुर् और पथिन् शब्दान्त समास से 'अ' प्रत्यय होता है। यथा—ऋचोऽर्धम् = अर्धर्चः। विष्णोः पूः = विष्णुपुरम्। राज्ञोधूः = राजधुरा = राज्यभार। जलस्य पन्थाः = जलपथः। राज्ञः पन्थाः = राजपथः।

१०—दर्शन से भिन्न अर्थ में जो अक्षि शब्द तदन्त प्रातिपदिक से अच् प्रत्यय होता है। यथा—गवाक्षीव = गवाक्षः = झरोखा।

११—उपसर्ग से परे जो अध्वन् (मार्ग) शब्द तदन्त से समासान्त अच् प्रत्यय होता है। प्रगतोऽध्वानम् प्राध्वो रथः।

१२—पूजावाचक शब्द से परे समासान्त प्रत्यय नहीं होते। यह नियम सु और अति के लिये है। यथा—शोभनो राजा = सुराजा। अतिराजा = पूज्य राजा।

इति समास प्रकरणम्।

## उदाहरणानि।

त्रायतां शरणापन्नम् = शरण में आये हुए को बचावो। भूतबलिं न प्रयच्छति = प्राणियों के लिये भोजन नहीं देता है। तत्र पापभयं नास्ति = वहां पाप से डर नहीं है। नीलोत्पलं पश्य कथं सुशोभते = देख काला कमल कैसा अच्छा लगता है। यश्च क्रुध्यत्यनीशानो स च मूढतमो नरः = जो पुरुष मालिक न होकर गुस्सा करता है वह बड़ा मूर्ख है। कुकर्म कृत्वा स कथं सुखी भवेत् = नीच काम करके वह किस प्रकार सुखी होवे। अहं न तं देवसखं नमामि = मैं उस देवमित्र को प्रणाम नहीं करता। जितेन्द्रियं तं पुरुषं नमामि = जिस पुरुष ने अपनी

इन्द्रियों को जीता है उसको मैं प्रणाम करता हूँ। पठितपाठनरं प्रणमाम्यहम् = जिस पुरुषने पाठ पढ़लिया है उसको मैं प्रणाम करता हूँ। नरसुखं जगदीश ! लभेमहि = हे परमात्मन् हम नर सुख को प्राप्त हों। कुर्यात् सदा पापभयं मनुष्यः = मनुष्य सदा पाप से डरे। विद्यालयं गच्छति धर्मवीरः = धर्मवीर विद्यालय को जाता है। नीलोत्पलस्य शोभां किं वर्णयानि = काले कमल की शोभा का क्या वर्णन करूँ। अब्रह्मचारी लभते न सौख्यम् = जो ब्रह्मचर्य व्रतका पालन नहीं करता उसको सुख नहीं मिलता। न कर्तव्यानि कार्याणि अनार्याणां कदाचन = अनाड़ियों के काम कभी न करने चाहिये। वचनानि मदीयानि ऊरीकृत्य गृहं गतः = मेरे वचनों को मान कर घर को चला गया। सत्यं स्वर्गस्य सोपानम् = सत्य स्वर्ग की सीढ़ी है।

## भाषा बनाओ।

कुम्भकारपटकारावुभौ जानातिनारदः। अहोरात्रमधीमहे। कृतं मया देवसखस्य दर्शनम्। महाराजस्य रामस्य प्रसन्ना राज्ये प्रजाऽभूत्। सर्वाणि तीर्थानि कृतानि तेन सत्यव्रतं धारयता जनेन। पितरौ बालकैः पूज्यौ एष धर्मः सनातनः।

## संस्कृत बनाओ।

नारद कुम्हार और जुलाहे दोनों को जानता है। हम रात दिन पढ़ते हैं। मैंने देवमित्र को देखा है। महाराज रामचन्द्र जी के राज्य मे प्रजा सुखी थी। जिसने सत्यव्रत को धारण किया है उसने सब तीर्थ कर लिये। बालकों को मातापिता की सेवा करनी चाहिये यह सनातन धर्म है।

## भाषा बनाओ।

तत्र देवदत्तेन महात्मना समानि फलानि खादितानि। एकेन खलेन नरेण अस्मिन् गृहे वह्निः संदीपः। इमानि पद्यानि

युष्माभिः कण्ठस्थी करणीयानि। प्राचीनशास्त्रकाराणामृषीणां नैष सिद्धान्तः। यूयं मामत्र विहाय कुत्र गच्छथ नैष सज्जनपथः। ईदृशानि कर्माणि स्वप्नेऽपि न कार्याणि न तु हास्यं भविष्यति। मदीयानीमानि वचनानि भवद्भिर्लेख्यानि। अनेन शिवदत्तेन बालकेन सज्जनसङ्गतिः स्वीकृता। अष्टाध्याय्याः पञ्चविंशतिसूत्राणि नित्यं स्मरणीयानि। कृपां विधायाद्य सायं काले मां प्रति दर्शनमवश्यं देयम्। चन्द्रपालस्य रोगस्य इदानीम् कार्यं समाप्तिं नागात्। ईर्ष्यया स धनेश्वरो मां विद्यालये निन्दति। एकदा जलवर्षणेनैव मार्गे कर्दमः समजनि। ध्यानं दत्त्वा पाठं शृणुत तदा बोधो भविष्यति। न जाने युष्माभिरियमशुद्धिः कथं कृता। मन्निकटे साम्प्रतं रूप्यकाणि न सन्ति अतो मथुरां न गमिष्यामि। मयैकदा भावत्कं दर्शनं लवपुरे कृतमासीत्। यथाकालं सर्वेषां वस्तूनां परिवर्त्तनं भवतीति प्रत्यक्षम्। चैत्रस्य शुक्लपञ्चम्या अस्माकं परीक्षाऽऽरब्धा भविता। इदानीं भारते-वर्षे धान्यं महर्घतां गतम्। इमे गृहे स्वच्छे सुन्दरे च स्तः। अस्य वृक्षस्याम्राणि मिष्टान्युताहो अम्लानि?। अहं तान् सज्जनान् सम्यक् परिचिनोमि। इदानीमेव मया देवदत्तो गृहान्तरालेऽवलोकितः। अहं तत्र गन्तुं न वाञ्छामि अत्रैव वस्तुं कामये। एतेभ्यो बालकेभ्यो मिष्टमशनं रोचते मह्यं तु न रोचते। अहमेवं शीघ्रं चलितुमसमर्थोऽस्मि अतो विरमामि। ध्यानं विधाय स्वकं पुस्तकमध्येयम्। वयं विद्यानन्देन सह पवनसेवनाय वनं जिगमिषामः। युष्माभी राजपथे कोलाहलोऽश्रावि? महेशः स्वकीयलघुभगिन्याः श्वशुरालये गतवान्। इमे बालका मार्गे मां नित्यं दुःखयन्ति।

## भाषा बनाओ।

वहां महात्मा देवदत्त ने सब फल खा लिये। एक दुष्ट आदमी ने इस घर में आग लगा दी। इन पद्यों को तुम कण्ठस्थ

करलो। प्राचीन शास्त्रकार ऋषियों का यह सिद्धान्त नहीं है। तुम मुझको छोड़कर कहां जारहे हो, यह भलेमानसों का काम नहीं। ऐसे काम भूलकर भी नहीं करने चाहिये नहीं तो हँसी होगी। मेरे इन वचनों को आप लिख लेवें। इस शिवदत्त बालक ने सज्जनों का साथ स्वीकार किया है। अष्टाध्यायी के पच्चीस सूत्र नित्य याद करना चाहिये। महरबानी करके आज शाम को मुझसे अवश्यमेव मिलना। चन्द्रपाल की बीमारी के सबब से यह काम पूरा नहीं हुआ। ईर्ष्या से वह धनेश्वर मेरी विद्यालय में निन्दा करता है। एक बार पानी के बरसने से रास्ते में कीचड़ होगई। सावधान होकर तुम पाठ को सुनो तब बोध होगा। न जाने तुमने यह ग़लती क्यों की। मेरे पास इस वक्त रुपये नहीं हैं इसी लिये मथुरा को नहीं जाऊँगा। मैंने एक बार आपके दर्शन लाहौर में किये हैं। वक्त पर सब चीज़ों में तबादिला होता है यह ज़ाहिर है। चैत्र सुदि पञ्चमी को हमारा इम्तिहान शुरू होगा। इस वक्त हिन्दुस्तान में अन्न महँगा होगया है। ये दोनों मकान साफ़ और सुथरे हैं। इस पेड़ के आम मीठे हैं या खट्टे हैं?। मैं उन भले आदमियों को अच्छी तरह जानता हूँ। इसी वक्त मैंने देवदत्त को घर के भीतर देखा है। मैं वहां जाना नहीं चाहता यहीं रहना चाहता हूँ। इन लड़कों को मीठा भोजन अच्छा लगता है मुझको नहीं। मैं इस तरह जल्दी चलने से मजबूर हूँ इस लिये ठहरता हूँ। ध्यान देकर अपनी किताब पढ़ना चाहिये। हम विद्यानन्द के साथ हवा खाने के लिये जङ्गल को जाना चाहते हैं। तुमने सड़क पर शोर सुना था?। महेश अपनी छोटी बहिन की ससुराल गया है। ये लड़के रास्तेमें मुझको नित्य तङ्ग करते हैं।

## भाषा बनाओ।

एतेषां वृक्षाणां पत्राणि कपयः खादन्ति। बाला पूज्यान्

ब्राह्मणान् प्रणमन्ति । दुग्धेन शरीराणि पुष्टानि जायन्ते । स्वानि स्वानि पुस्तकानि आदाय शिशवः पठनाय व्रजन्ति । रात्रौ कुक्कुरा रक्षका भवन्ति । एषां वृक्षाणां सघना शीतला च छाया विद्यते । अत्र मक्षिका मत्कुणाश्च व्याकुलयन्ति । केनचिद् दुष्टेन नरेण धर्मनाथस्य वराकस्य वेश्म वह्निसात् कृतम् । तदानीं मम सनीडे धनं नासीत् । केवलानि भग्नानि इमानि पञ्चपात्राणि अवशिष्टानि सन्ति । लवपुरे श्रीठाकुर-दत्तस्य वैद्यराजस्य विशालमेकममृतधाराभवनं विद्यते । वृन्दा-वनीयगुरुकुलस्येमे ब्रह्मचारिणः उताहो ऋषिकुलस्य । गजस्य द्वौ दीर्घौ दन्तौ विद्येते । अस्मिन् पुस्तकालये संस्कृतस्य बहूनि पुस्तकानि सन्ति । अनेन कर्मणा मम कश्चित् सम्बन्धो न विद्यते। भवद्भिरत्रावश्यं स्थातव्यं भविष्यति । सुरेन्द्रच्छात्रेण मया सह वृन्दावनमवश्यं गन्तव्यम् । एतेभ्यो बालकेभ्योऽद्यावश्यं दण्डो-मेलिष्यति । देवदत्तो ममैश्वर्यं दृष्ट्वा ईर्ष्यति । अद्य युष्मान् सर्वान् ममेऽग्रे नैव कार्यम् । लघवः शिशवः पङ्गुं संवीक्ष्य हाह-सन्ति । मुख्याध्यापकेनाऽस्मभ्यं द्वयोर्दिवसयोरवकाशो दत्तः । तेन सुखदेवेन भवदेवं प्रति एष प्रश्नः कृतः । मदर्थमेकस्मिन् पात्रे शीतलं जलमानेयम् । प्रत्यावर्त्तितानि तानि सर्वाणि पुस्तकानि । रामेण रावणो हतः । भुक्तभोजना वयं सर्वे । तेन शिवेन युष्मभ्यं शतमुद्रा दत्ताः सन्ति ? । राजा पालयति प्रजाम्। अध्यापको दण्डयिष्यति जनकश्च तर्जयिष्यति । मदीयेन ज्येष्ठेन बान्धवेन एकस्य पुस्तकस्य दानस्य प्रतिज्ञा कृता । अर्थदण्डेन अद्य देवदत्तो दण्डितः । सर्वेजनाः प्रशंसन्ति देवदत्तनरोत्तमौ । त्वया नेयं मया देयम् आनेयं शिवशर्मणा । एष वृत्तान्तस्तत्र शीघ्रं प्रेषणीयः । ममैकस्य सप्ताहस्याऽवकाशो लब्धः । मामकीना ईदृशा विचाराः सन्ति अग्रे भवन्तः प्रमाणम् । मम गमनात् स प्रागेव ततो गतवान् । भवतां लेखनस्यानुमत्या लिखितम् ।

## संस्कृत बनाओ।

इन वृक्षों के फलों को बन्दर खाते हैं। बालक पूजनीय ब्राह्मणों का मान करते हैं। दूध से शरीर पुष्ट होता है। अपने २ पुस्तकें लेकर बालक पढ़ने के लिये जाते हैं। रात में कुत्ते रक्षा करते हैं। इन पेड़ों की घनी और शीतल छाया है। यहां पर मक्खी और खटमल दुःख देते हैं। किसी नीच आदमी ने धर्मनाथ के मकान को जला दिया। उस वक्त मेरे पास धन नहीं था। सिर्फ फूटे हुए ये पाँच वर्तन बाकी हैं। लाहौर में श्री-ठाकुरदत्तजी वैद्यराज का एक विशाल अमृतधारा नामक भवन है। वृन्दावन गुरुकुल के ये ब्रह्मचारी हैं अथवा ऋषिकुल के? हाथी के दो बड़े दाँत होते हैं। इस पुस्तकालय में संस्कृत के बहुत पुस्तक हैं। इस काम से मेरा कोई सम्बन्ध नहीं। आप का यहां अवश्य ही रहना होगा। विद्यार्थी सुरेन्द्र को मेरे साथ वृन्दावन को अवश्य जाना चाहिए। इन लड़कों को आज अवश्य दण्ड मिलेगा। देवदत्त मेरी वृद्धि को देखकर कुढ़ता है। आज तुमको छोड़ता हूँ आगे ऐसा न करना। छोटे बालक लङ्गड़े को देखकर बहुत हँसते हैं। प्रधानाऽध्यापक ने हमारी दो दिन की छुट्टी मंज़ूर की है। उस सुखदेव ने भवदेव से प्रश्न पूछा। मेरे लिये एक वर्तन में ठण्डा पानी लाना चाहिए। वे सब किताबें लौटा दीं। राम ने रावण को मारा। हम सब ने खा लिया है। उस शिव ने तुम को सौ रुपये दिये हैं?। राजा प्रजा का पालन करता है। अध्यापक दण्ड देंगे और पिता धमकावेंगे। मेरे बड़े भाई ने एक पुस्तक के दान की प्रतिज्ञा की है। आज देवदत्त पर जुर्माना हुआ है। सब पुरुष देवदत्त और नरोत्तम की प्रशंसा करते हैं। तुझे ले चलना चाहिए मुझे देना चाहिये और शिवशर्मा को लाना चाहिये। यह खबर वहां जल्द भेजना चाहिये। मैंने एक सप्ताह का अवकाश लिया है।

मेरे ऐसे विचार हैं आगे जैसी आपकी आज्ञा। मेरे जाने से वह वहांसे पहले ही चला गया। आपके लिखने के बाद मैंने लिखा।

## भाषा बनाओ।

सूर्योऽस्तमेति चन्द्रश्चोदेति। अत्र शीतलोमन्दसुगन्धो वायुर्वाति। विद्यालये एकीभूय ब्रह्मचारिणः साम गायन्ति। नरेन्द्रः पुस्तकानि क्रेतुं मथुरां गतवान्। तस्य समीपे मयैकं पत्रं प्रहितम्। किं यूयमत्र भूम्यां शेध्वे। अद्यानेन हरिणा पाठो नो-स्मृतः—अतो दण्डं लप्स्यते। युष्माभिस्तस्य कथम् अवज्ञा कृता। मया तु तानि पुस्तकानि विक्रीतानि। प्रातः स बालो मयात्रैव क्रीडन् विलोकितः। गौराङ्गनानामागमनात् प्रागार्यावर्त्ती जनता अत्रदुःखिता नासीत्। अहं हट्टं गमिष्यामि—आनेष्यामि फलानि च। भवान् श्वः मम गृहमागन्ता ?। अस्मिन् वृक्षे काकस्य नीडोऽस्ति। इन्द्रप्रस्थे पृथिवीराजस्य राजमन्दिरस्य इदानीमपि चिह्नं दृश्यते। अश्वानां धावनं द्रष्टुं गमिष्यामो वयं सर्वे। एकाकी न गच्छामि मम माता निषेधति। कुतो लब्धमिदं वस्त्रम्। अद्य त्वया तत्रावश्यं गन्तव्यं भविष्यति। युष्माभि-र्यथाकालं पाठशाला गन्तव्या। अहह? कीदृशीयं शोभना वेला। भवन्तः सुखेन स्वकीयं कालं व्ययन्तु वयमीश्वरं प्रति प्रार्थयामः। भवतः पुत्रो नैरोग्यं शीघ्रं लभेत। वयं यस्मिन्देशे निवसामस्तं जना आर्यावर्तं निगदन्ति। यद्गृहं धर्मनाथेन क्रीतं तत्सुन्दरं विशालं नवीनं चास्ति। यो बालको मया सह ह्यो वार्त्तालापं कुरुते स्म स व्रजनाथस्य कनिष्ठः पुत्रः। यत्पुस्तकं तेन युष्मभ्यं दत्तं तत्कुत्र रक्षितम्। छिन्नकरोऽयं केशवः—अतो लेखनेऽसमर्थः। यावद् वृन्दावनमवासं तावद् रोगेण नहि मुक्तः। ईदृशो रमेशो बलिष्ठोऽस्ति, इमं गुरुं पाषाणमनायासेनोत्थापयति। यदि नैजं कल्याणं वाञ्छथ तर्हि अध्ययनस्याऽवहेला नहि कार्या। याव-दहं नागच्छेयं तावद् युष्माभिरत्रैव स्थेयम्। यथा ते तत्र

गतवन्तस्तथैव सर्वे उत्थिताः । भोजदेवे बलं विद्यते परन्तु साहसं न। यो महतः पूज्यान् निन्दति स एकाकी दोषी न अपितु श्रोतारोऽपि दोषभाजः । सूर्याचन्द्रौ पृथ्वीसदृशौ गोलौ स्तः। त्रिदिनानन्तरं मदीया परीक्षा भविता। अस्थिरे धनयौवने। यद् वक्तव्यं तदुक्तं अग्रे किमपि न वक्ष्यते । इदानीमस्मिन् नगरे विसूचिका प्रसृतास्ति ।

## संस्कृत बनाओ ।

सूर्य छिपता है और चन्द्रमा निकलता है। यहां पर शीतल मन्द सुगन्ध हवा चलती है। विद्यालय में इकट्ठे होकर ब्रह्मचारी सामगान करते हैं। नरेन्द्र पुस्तक बेचने के लिये मथुरा को गया है। उसके पास मैंने एक पत्र भेजा था। क्या तुम यहां ज़मीन पर सोते हो । आज इस हरि ने पाठ याद नहीं किया इसलिये दण्ड पा रहा है। तुमने उसका क्यों अपमान किया। मैंने तो वे किताबें बेच डालीं । सुबह वह लड़का खेलता हुआ यहीं मैंने देखा था। अङ्गरेज़ों के आने से पहले यहां की प्रजा अन्न से दुःखित न थी । मैं हाट को जाऊँगा और फलों को लाऊँगा । कल आप मेरे घर पर आवेंगे । इस पेड़ पर कौओं का एक घोंसला है। देहली में पृथ्वीराज के राजमहल के अब भी चिह्न दिखाई देते हैं । घुड़दौड़ देखने के लिये हम सब जा रहे हैं। अकेला नहीं जाऊँगा मेरी मा मने करती है। यह कपड़ा कहां मिला। आज तुमको वहां अवश्य जाना होगा। तुमको समय पर पाठशाला में आना चाहिए । अहह कैसा अच्छा वह समय है। आप सुखपूर्वक अपने काल को बितावें। हम ईश्वर से प्रार्थना करते हैं आपका पुत्र शीघ्र नीरोग होजावे। हम जिस देश में रहते हैं उसको लोग आर्यावर्त्त कहते हैं। जो घर धर्मनाथ ने मोल लिया है वह सुन्दर विशाल और नया है। जो लड़का मेरे साथ बातचीत कर रहा था वही

ब्रजनाथ का छोटा पुत्र है। जो पुस्तक उसने तुमको दिया था वह कहां रख दिया। केशव का हाथ कटा हुआ है इसलिये नहीं लिख सकता। जबतक मैं वृन्दावन में रहा तबतक रोगने नहीं छोड़ा। रमेश ऐसा बलवान् है कि इस भारी पत्थर को सहज में उठा लेता है। यदि अपनी भलाई चाहते हो तो पढ़ने का अनादर नहीं करना चाहिए। जब तक मैं न आऊं तब तक तुमको यहीं रहना चाहिए। जैसे वे वहां गये वैसे सब उठ खड़े हुये। भोजदेव में बल है परन्तु साहस नहीं है। जो बड़े पुरुषों की निन्दा करता है वह अकेला दोषी नहीं अपितु सुनने वाले भी दोषी हैं। सूर्य और चन्द्रमा पृथिवी के तुल्य गोल हैं। तीन दिन के पश्चात् मेरी परीक्षा होगी। धन और युवावस्था सदा नहीं रहती। जो कुछ कहना था वह कह दिया आगे कुछ भी न कहा जायगा। इस वक्त इस शहर में हैज़ा फैला हुआ है।

## भाषा बनाओ।

तत्राऽनेन रोगेण पञ्चाशन्मनुष्या यमालयं प्रयान्ति। शिवस्य जनकस्य ईदृशी दशा न विद्यते स स्वकं तनयं साम्प्रतं पाठयेत्। चङ्क्रम्यमाणान् इमान् ब्रह्मचारिणोऽहं वृन्दावनेऽद्राक्षम्। यदानेनावलोकितं कश्चिदत्र न विद्यते तदा वस्त्रं समादाय पलायितः। शिवः यथानियमं पाठशालां न व्रजति, अतएवाद्य गुरुणा पाठशालातो निःसारितः। अत्र कश्चित् सन्देहो नास्ति भूम्यधिकारिणो धनिकस्य च तनयोस्ति परन्तु अन्येषामवज्ञाकरणमुचितं न प्रतीयते। केशवेन मार्गे मम करं संगृह्येदमुक्तं पाठशाला त्वया न गन्तव्या अद्यावकाशो विद्यते। यथा मत्स्या जले निवसन्ति तथैव वयं पवने निवसामः। पवनस्य रूपं न विद्यते अतो लोचनाभ्यां न दृश्यते। मधुमक्षिकाणां परिश्रमं स्वच्छताम्, सहवासं च विलोक्य लज्जन्तामलसाः। नक्तन्दिवं कार्यं कुर्वन्ति क्षणमेकमपि न व्यर्थं नयन्ति। सर्वेषु

धातुषु सुवर्णं बहुमूल्यम् । परन्तु संसारे लोहेन बहूनि कार्याणि सिध्यन्ति । परिश्रमेणैवोन्नतिर्जायते । यत्र परिश्रमस्तत्रैवोन्नतिर्दृश्यते । पृथिव्यामुन्नतजातयो यावत्यो विलोक्यन्ते ताः सर्वाः परिश्रमिण्यः । ईश्वरोऽपि परिश्रमिणो वृद्धिमुपदिशति । अलसा नरा ईश्वरस्याज्ञामुल्लङ्घयन्ति । ऐक्येन कार्यमनायासेन भवति । ईदृशं जगति किमपि कार्यं न विद्यते यच्चैक्येन न सिध्येत् । प्रातरुत्थानेन स्वास्थ्यं समीचीनतामुपयाति । स्वास्थ्यं सुखस्य कारणम् । स्वास्थ्यरक्षा सुखकरी । केचिच्छात्राः पठनकाले स्वास्थ्यरक्षणे ध्यानं न ददति ते परीक्षासमये पश्चात्तपन्ति । युष्माकं प्रबन्धे तृतीयस्यां पङ्क्तौ चतस्रोऽशुद्धयः सन्ति । मन्दुरायां वाजिनो ह्रेषन्ते । असज्जनैर्बालकैः सह वार्तालापो न विधेयः । वस्त्राणि परिधानीयानि विद्यालयगमनस्य समयः संवृत्तः । बाल्यविवाहस्य रीतिर्भारतं रसातलं नयति । तेन लिखितमहं त्रयाणां मासानामवकाशं ग्रहीष्यामि । भवन्तः कृशाः प्रतीयन्ते । सर्वेषु फलेषु मह्यमाम्राणि रोचन्ते । अहं त्वयि विश्वसिमि । मयि भवतां महती दया विद्यते । जनेन धनेन च भारतीयैः पाश्चात्यानां संगरे साहाय्यं कृतम् । तत्र ते उपस्थिता नासन् । अस्य ग्रामस्य मध्ये एकोऽपि विटपो नास्ति ॥

## संस्कृत बनाओ ।

यहां इस रोग से ५० आदमी मरते हैं । शिव के पिता की ऐसी हालत नहीं है कि वह अपने लड़केको इस वक्त पढ़ासके । घूमते हुये इन ब्रह्मचारियों को मैंने वृन्दावन में देखा था । जब इसने देखा कोई यहां नहीं है तब कपड़ा लेकर भाग गया। शिव नियमपूर्वक पाठशाला को नहीं जाता । इसलिये गुरुजी ने पाठशाला से निकालदिया। इसमें कोई सन्देह नहीं कि यह जमीदार और मालदार का लड़का है परन्तु दूसरों का अपमान करना अच्छा नहीं । केशव ने मार्ग में मेरा हाथ पकड़कर यह कहा कि

पाठशाला को न जावो आज छुट्टी है। जिस तरह मछलियां पानी में रहती हैं वैसे ही हम हवामें रहते हैं। हवा का रूप नहीं है इसलिये आँखों से दिखलाई नहीं देती। शहद की मक्खियों की मेहनत सफाई और मेल से रहना देखकर आलसियों को शरमाना चाहिये। रात दिन काम करती हैं एक क्षण भी निरर्थक नहीं खोतीं। सब धातुओं में सोना बेशक़ीमत है। लेकिन लोहे से बहुत काम निकलते हैं। मेहनत से ही बढ़ती होती है। जहां मेहनत है वहीं पर बढ़ती है। भूमि पर जितनी जातियां उच्चता को प्राप्त हुई हैं वे सब परिश्रमशीला हैं। ईश्वर भी परिश्रमियों को मेहनत का उपदेश करता है आलसी आदमी ईश्वर की आज्ञा को तोड़ते हैं। मेल से सहज में काम होजाता है। संसार में ऐसा कोई काम नहीं जो एकता से सिद्ध न हो सके। सुबह उठने से तन्दुरुस्ती बढ़ती है। तन्दुरुस्ती खुशी का बायस है। तन्दुरुस्ती की हिफ़ाज़त रखना सुख है। कुछ विद्यार्थी पढ़ने के समय तन्दुरुस्ती का ध्यान नहीं रखते वे इम्तिहान के समय दुःखी होते हैं। तुम्हारे निबन्ध की तीसरी सतर में चार ग़लती हैं। तबेले में घोड़े हींसते हैं। नीच लड़कों के साथ बातचीत नहीं करनी चाहिये। कपड़े पहनने चाहियें पाठशाला जाने का समय होगया। कम उम्रकी शादी हिन्दुस्तान का नाश कर रही है। उसने लिखा कि मैं तीन महीने की छुट्टी लूंगा। आप दुबले मालूम होते हैं। सब फलों में मुझे आम अच्छे लगते हैं। मैं तुम पर यक़ीन करता हूँ। मुझ पर आप की बड़ी मेहरबानी है। आदमियों और धन से हिन्दुस्तानियों ने अँग्रेज़ों की युद्ध में मदद की थी। वहां पर वे न थे। इस गांव के बीच में एक भी पेड़ नहीं है।

## भाषा बनाओ।

अस्मासु तेऽप्रसन्नाः सन्ति। उपवस्त्रेण मुखमाच्छादनीयम्।

कविषु कालिदासस्य स्थानं महदस्ति । तस्मिन् महात्मनि मदीया महती श्रद्धा विद्यते । ईदृश्या लेखन्या लेखितुमहमसमर्थः । वयं नात्र काशीं गमिष्यामः । शिवं विना सर्वे उपस्थिता आसन् । दुग्धेन दधि सम्पद्यते । दया दीनेषु कर्त्तव्या । रोगी भूत्वा गृह गतः । देवदत्तस्य द्वे कार्ये शयनं खादनं खलु । तेन सह मामकीनः सम्यक् परिचयोऽस्ति । अस्मिन् नगरे मामकानि बहूनि मित्राणि सन्ति । आत्मनीनाभ्यां नेत्राभ्यां त्वया स दृष्टः । इयं घोषणा केन कारिता । प्रातरेव प्रस्थास्यामि । अद्य परीक्षां न दित्साभि । तत्र गत्वा नागमिष्यामि । धर्मनाथेन सह माघे प्रयागं गन्तास्मि । स मम वार्त्तायां ध्यानं न ददाति । इह पृथिव्यां मातापितृभ्यां महान् कश्चिदपि नास्ति । पितरौ यावतीं प्रीतिं कुर्वाते तावतीं प्रीतिं पृथिव्यामन्यः कश्चिन्न विदधाति । बहूनां पुस्तकानाम् अध्ययनेनैव ज्ञानस्य वृद्धिर्जायते । ये विषया महद्भिर्विद्वद्भिरन्विष्य निःसारिताः पुस्तकानामवलोकनेन तेषां ज्ञानं जायते । स्वाध्याये अनुरागेण मनुष्येण भाव्यम् अनेन ज्ञानवर्धनं सदाचारस्य च रक्षणं भवति । सदाचार एव मनुष्यस्य मनुष्यत्वम् । अधोलिखितानां पुस्तकानां महती आवश्यकता विद्यते । प्राचीनकाले अत्र भारते चौर्यं नासीत् इदं विदेशीया ऐतिहासिका लिखन्ति । भारतवर्षान्तर्गते मैसूरनामकं नगरं तत्र चामीकरस्य आकरा विद्यन्ते । तत्रत्यभूपालस्याऽधिकारे न ते आकराः, यूरोपीयैः स्वायत्तीकृताः सन्ति । अस्मदीये देशे गोलकुण्डामछलीपट्टनादिस्थानेषु हीरकमणीनामाकराः सन्ति । मैसूरराज्ये संस्कृतस्य अलभ्यानि प्राचीनानि पुस्तकानि अङ्कयित्वा प्रकाशयन्ते । अतस्तत्रत्यो महीपालो धन्यवादार्हः । आरतं भारतं दृष्ट्वा कस्य न हृदये व्यथा । भूगोले सर्वदेशेषु आर्यावर्त्तस्येयं दशा । अविद्यायाः प्रभावेण शूराणां खलु भावनः । विद्यावृद्धिश्च कर्त्तव्या ब्रह्मचर्य्यस्य रक्ष-

णम् । तदा भारतवर्षस्य कल्याणं वोभविष्यति । नास्तिकत्वं सदा हेयं ध्येयं ब्रह्मसनातनम् । मित्रस्य चक्षुषा विश्वं द्रष्टव्यं सर्वमानवैः । स एव दुःखहर्त्ता नः स एव परिपालकः । स एव राजराजो नो येन सृष्टमिदं जगत् ।

## संस्कृत बनाओ ।

वे हम पर नाराज़ हैं । रूमाल से मुँह ढांप लो । कवियों में कालिदास का पद बड़ा है । उस महात्मा में मेरी बड़ी भक्ति है । ऐसी क़लम से मैं लिखने में मजबूर हूँ । मैं नाव के द्वारा काशी को जाऊँगा । शिव को छोड़कर सब हाज़िर थे । दूध से दही बनता है । दीनों पर दया करनी चाहिये । बीमार होकर घर को चला गया । देवदत्त के दो काम हैं सोना और खाना । उसके साथ मेरा अच्छे प्रकार मेल है । इस शहर में मेरे बहुत दोस्त हैं । तुमने अपनी आंखों से उसको देखा ? यह मुनादी किसने कराई है । सुबह ही चला जाऊँगा । आज मैं इम्तिहान नहीं देना चाहता । वहां जाकर नहीं आऊंगा । धर्मनाथ के साथ माघ में प्रयाग को जाऊंगा । वह मेरी बात पर ख्याल नहीं करता । इस पृथिवी पर माता पिता से बड़ा कोई भी नहीं । माता पिता जितना प्रेम करते हैं उतना प्रेम भूमि पर और कोई नहीं करता । बहुत पुस्तकों के पढ़ने से ज्ञान की वृद्धि होती है । जो विषय बड़े विद्वानों ने खोजकर निकाले हैं पुस्तकों के देखने से ही उनका ज्ञान होता है । अपने पढ़ने में मनुष्य को प्रेम रखना चाहिये इससे ज्ञान की वृद्धि और सदाचार की रक्षा होती है । सदाचार ही मनुष्य की मनुष्यता है । नीचे लिखे हुए पुस्तकों की बड़ी ज़रूरत है पुराने ज़माने में इस भारतवर्ष में चोरी नहीं थी यह विदेशी ऐतिहासिक लिखते हैं । हिन्दुस्तान के दक्षिण में मैसूर राज्य है उसमें सोने की खानें हैं । वे सोने की खानें वहां के राजा के अधिकार में

नहीं हैं अँग्रेज़ों ने अपने अधिकार में कर रक्खी हैं। हमारे देश में गोलकुण्डा मछली पट्टनादिक स्थानों में हीरे की खानें हैं। मैसूर राज्य ने अलभ्य प्राचीन संस्कृत के पुस्तक छापकर प्रकाशित किये हैं। इस लिये वहां के राजा धन्यवाद के योग्य हैं। दुःखित भारत को देखकर किसके हृदय में दुःख नहीं? दुनियां में जितने देश हैं उन सब में हिन्दुस्तान की इस समय ऐसी हालत है। विद्या के अप्रचार से और वीरों के अभाव से। विद्या की वृद्धि और ब्रह्मचर्य का पालन करना चाहिये। तब भारतवर्ष का कल्याण होगा। नास्तिकता छोड़ना चाहिए और सनातन ब्रह्म का ध्यान करना चाहिए। प्रेम से सबको देखना चाहिए। वही हमारे दुःखों को दूर करने वाला है और वही हमारा रक्षक है वही हमारे राजाओं का भी राजा है जिसने कि इस संसार को बनाया है।

## भाषा बनाओ।

आज्ञा तस्य शिरोधार्या तदा सौख्यं भविष्यति। भेदभावेन वैरोध्यं समभावेन तुल्यता। उपकारेण सौहार्दम् अपकारेण शत्रुता। यत्र दया धर्मो न विद्यते तत्र कदापि न तेन गंस्यते। शिवेन पाठो नाद्य पठ्यते। बटुना हरिणा जलं पीयते। बालो-वृद्धं नन्नम्यते। वेदं विप्रो मम्मन्यते। धूर्त्तो धर्मं जङ्घन्यते। यमुना मथुरां जङ्गम्यते। शीर्षं पीडा बोभवीति। तदा वृत्तं लोलवीति। एषा वृद्धा दोधुवीति। धर्मो मर्त्यं पोपवीति। चोरो द्रविणं जरीहरीति। भृत्यस्तोयं बरीभरीति। राजा वस्त्रं दरीधरीति। रामो नद्यां तरीतरीति। शान्त्यानन्दः पण्डितायते। विद्यानन्दो नो खलायते। पश्य धर्मनाथो गजायते। जगदीशो लवणं गुडायते कथं नरेन्द्रस्तस्करायते। पश्योऽयं पुरुषोऽबलायते। नवल-किशोरः कुरङ्गायते। जगत्प्रसादस्तुरङ्गायते।

## संस्कृत बनाओ।

उसका हुक्म शिरोधार्य मानना चाहिए। तब सुख होगा। भेद भावसे विरोध बढ़ता है और समभावसे समता होती है। भलाई से मित्रता और बुराई से वैर बढ़ता है। जहां पर दया और धर्म नहीं है वहां पर वह कभी भी न जायगा। शिव आज पाठ नहीं पढ़ता। ब्रह्मचारी हरिश्चन्द्र पानी पीता है। बालक वृद्ध को बार बार प्रणाम करता है। वेद को ब्राह्मण बहुत ही मानता है। धूर्त्त धर्म का बार बार हनन करता है। यमुना मथुरा को टेढ़ी गई है। शिर में बहुत ही पोड़ा होती है। बढ़ई वृत्त को वार वार काटता है। यह बुढ़िया बहुत ही काँपती है। धर्म मनुष्यको वार वार पवित्र करता है। चोर धनको वारवार चुराता है। नौकर पानी को वार वार भरता है। राजा कपड़े को वार वार पहनता है। राम नदी में वार वार तिरता है। शान्त्यानन्द पण्डित बनता है। विद्यानन्द दुष्ट नहीं बनता। तू देख धर्मनाथ हाथी की तरह मोटा होता जाता है। जगदीश नमक को गुड़ की तरह खाता है। नरेन्द्र चोर की तरह क्यों हरकत करता है। देख यह आदमी औरत की भांति चलता है नवलकिशोर हिरण की तरह कूदता है। जगत्प्रसाद घोड़े की तरह कदम चलता है।

परमात्मा यत् किञ्चिद् विदधाति तद् हितायैव।

एकस्य भूपालस्य अमात्यस्य एष दृढविश्वास आसीत्। ईश्वरो यद् विदधाति तत् समीचीनतममेव। एकदा नृपामात्यौ आखेटार्थं भयावहे सघने वने जग्मतुः। तत्र सिंहे प्रहारे कृते सति भूपालस्य अङ्गुली छिन्ना। राजा मन्त्रिणमुवाच। मन्त्रिन् मदीयाङ्गुलिः शस्त्रप्रहारेण छिन्ना। मन्त्री ऊचे राजन् विधाता यद् विदधाति तत् सुन्दरतरमेव। मन्त्रिण इदं वाक्यमाकर्ण्य

राजा चुकोर। तस्मिन्नेव काले निःसारितः। मन्त्री च स्वगृह-माजगाम। अन्यस्मिन् दिने राजा आखेटं कुर्वन् सन् द्वितीय-राज्ये जगाम। तत्रत्यस्य भूपालस्य बलिप्रदानाय एकस्य नरस्य आवश्यकता आसीत्। राजसेवका एनं राजानं संगृह्य नीत-वन्तः। यदा तत्रत्यैः पण्डितैरेव राजावलोकितस्तदा तैश्छिन्ना-ङ्गुलिं हीनाङ्गं दृष्ट्वा कथितम्। अङ्गभङ्गस्य नरस्य बलिदानं न क्रियते। तदा स राजा मुक्तोऽभूत्। तदा भूपालो मनसि निर्धा-रितवान् ईश्वरो यत् किञ्चिद् विदधाति तद् हितायैव। पुनः स्वभवनमागत्य स राजा मानपुरःसरं मन्त्रिणमाहूय उवाच। मन्त्रिन्! सत्यं यदीश्वरः करोति तत्सर्वं हितायैव।

## व्यायामः।

व्यायामेन शरीरस्य रक्षा सम्यग् भवति। आबालमेतदव-गच्छन्ति यत्खलु शारीरिकं श्रमं किञ्चित् कार्यं वा पुरुषोऽकृत्वा शरीरस्य स्वास्थ्यं रक्षितुं न समर्थो भवति। स्वास्थ्यविनाशे सति विचारशक्तेरपि ह्रासो जायते। विचारशक्तौ विनष्टायां सत्यां मनुष्यस्य शतमुखो विनिपातोऽनायासेन जायते। जगति बहवो मनुजाः प्रातः कालमारभ्यासायं कालमन्नलाभाय परिश्रमन्ति। तेषां स्वस्थता सम्यग् जायते। परन्तु ये मानवा दिवसे प्रतिक्ष-णमुपविश्य कार्यं कुर्वते तैः पुरुषैः स्वास्थ्यलाभाय व्यायामो-ऽवश्यं करणीयः। ये विद्यार्थिनः प्रतिसमयम् उपविश्य पुस्तकानां घोषणं मननं वा विदधते तेषामपि स्वास्थ्यं व्यायामं विना नश्यति। व्यायाममन्तरा कायः शैथिल्यमापद्यते। व्यायामेन देहस्याऽवयवाः पुष्टिं प्रयान्ति। शरीरं दर्शनीयमुपयाति। यथा-कालं क्षुधा प्रादुर्भवति। व्यायामेन कुरूपोऽपि जनः सुरूपो जायते व्यायामशीलस्य नरस्य देहं रोगा नाभिभवन्ति।

उक्तं च — व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्त्तितस्य च। व्याधयो-नापसर्पन्ति वैनतेयमिवोरगाः॥

## स्वाध्यायोऽध्येतव्यः ।

स्वाध्यायः परमो धर्मो मानवानाम्, विशेषतो विद्यार्थिनाम्। यथा यथा मानवः प्रकृतिबन्धनमतीत्य आत्मतत्त्वविवेचनाय ग्रन्थानां परिशीलनं विदधाति तथा तथा तस्य ज्ञानार्जनस्पृहा वर्धते। पूर्वजानामृषीणां ब्राह्मणानां शूराणां राजन्यानां धर्मनिष्ठानां वैश्यानाम्, सेवाधर्माणां शूद्राणां च चरितानि ग्रन्थानामवलोकनेनैव जायन्ते। पूर्वजानां क आचाराः के विचाराः का विद्या का अविद्या कीदृशी राजनीतिः किं गौरवं किं शौर्यं को धर्मः, कोऽधर्मः किं खाद्यम्, किमखाद्यम् के वर्णाः क आश्रमाः, वर्णाश्रमाणां च कावश्यकता को लाभश्चैतेषां प्रश्नानामुत्तराणि स्वयं लभ्यन्ते। स्वाध्यायः किल बोधयति मानवानामात्मकर्म तत्कृत्वा नितान्तं तृप्यति नरः। पुरा भारते स्वाध्यायस्य मुख्यनियम आसीत्। उक्तं च शतपथे—

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति।

पुरा बाला उपनीता अनुपनीता वा गुरुकुलं प्रेष्यन्ते स्म। तत्रानुपनीता बाला गुरुणैव तद्वर्णाधिकारानुसारमुपनीयन्ते स्म। स एव कालस्तेषां विद्याध्ययनस्य, ब्रह्मचर्येण गुरौ वसन्तः सन्तः विद्यामनुशीलयामासुः। गुरुकुलानि हि नगराद् बहिः नद्याः कूले कुत्रचिद् वने प्रतिष्ठाप्यन्ते स्म। तत्र केवलब्रह्मचारिण एव निवसन्ति स्म। गुरवः-मनसा वाचा कर्मणा तेषां हितमीहमानाः सदाध्यापयन्ति स्म। यथा च यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि। स्वाध्यायान्मा प्रमदेति॥ गुरवः स्वकीयेन पवित्रेण जीवनेन स्वकान् शिष्यान् धर्मोपदेशेन पावयन्ति स्म। तदानींतनानां जनानां जीवनानि धर्म्याण्यासन्॥

—*—

नो सोदरो न जनको जननी न जाया,
नैवात्मजो न च कुलं विपुलं बलं वा।
संदृश्यते न किल कोऽपि सहायको मे,
तस्मात्त्वमेव शरणं मम दीनबन्धो ! ॥१॥
पूर्वं कृतानि दुरितानि मया तु यानि,
स्मृत्वाखिलानि हृदयं परिकम्पते मे।
ख्याता च ते पतितपावनता दयालो !
तस्मात्त्वमेव शरणं मम दीनबन्धो ! ॥२॥
गायन्ति सामकुशला यमजं मखेषु,
ध्यायन्ति धीरमतयो यतयो विविक्ते।
पश्यन्ति योगिपुरुषाः पुरुषं शरीरे,
वन्दे महापुरुष ! ते चरणारविन्दम् ॥३॥
तीर्थादिसेवनमहाविधिना हि नाथ !
नाकारि येन मनसो मम शोधनं स्यात्।
शुद्धिं विना न मनसोऽवगमापवर्गौ।
तस्मात्त्वमेव शरणं मम दीनबन्धो ! ॥४॥
तप्तं तपो नहि कदापि मयेह तन्वा,
वाण्या तथा नहि कदापि तपश्च तप्तम्।

त्रिश्माभिर्मुषितचेता न मानसं ...
... ॥५॥

... मम ... नहि याति सौ...
... न तव पश्यति विश्वरूपम् । वा...
तथैव ... सौम्यवाणीं तस्मात्० ॥...

दुर्वासना मम सदा परिकर्षयन्ति ...
शरीरमपि रोगगणा दहन्ति । संजीवनं च ...
हस्तगतं सदैव तस्मात्० ॥७॥

मनुजदेहमिमं भुवि दुर्लभं समधिग...
सुरैरपि वाञ्छितम् । विषयलम्पटतामपहाय
भजत भो मनुजाः ! परमेश्वरम् ॥ ८ ॥

न वनिता न सुतो न सहोदरो न
पिता जननी न च बान्धवः । व्रजति साकम
जनेन वै भजत भो मनुजाः ! परमेश्वरम् ॥...

सकलमेव चलं सचराचरं जगदिदं ...
रां धनयौवनम् । समवलोक्य विवेकदृशा ...
भजत भो मनुजाः ! परमेश्वरम् ॥ १०

---